र्तव्यताकत्वमिति सिद्धांतितत्वाद्गोदातीरविषयेतु तद्बह्वंतर्गततीर्थविशिष्टत्वा-त्पूर्वोक्त-प्रामाण्येन तीर्थोपसंहार-न्यायेनच श्रीत्र्यंबकक्षेत्रस्थे दुर्लभत्वपुण्यत-मत्वयात्रानित्यत्वादिगुणोपेते मूलभूतकुशावर्ततीर्थ एव मुंडनादिकं सिद्धं ज्ञेयं तस्य त्र्यंबकमहाक्षेत्रस्थत्वाद्भवन्मतानुरोधेनापि तत्क्षेत्राधिकरणकत्वेनाऽतिपु-ण्यदत्वं तत्रैवास्त्येवेति ॥ यथा स्कांदे "त्र्यंबकं चाब्जक" मित्यारभ्य "त-स्मात् त्र्यंबकएवैषा दुर्लभा सरितांवरा ॥ अब्जके सिंधुसंगेच सर्वत्र सुलभा पिहीत्यारभ्य प्रमादाद्यो नरो मूलमिति कुशावर्तेतु ये राजन् वपनमित्यंतपूर्वो-क्तैर्वचनैस्त्रिषु स्थानेषु दुर्लभत्वस्योपन्यासं कृत्वा तीर्थोपसंहारेण त्र्यंबकक्षेत्र एव सरिद्वराया गोदाया दुर्लभत्वं भणितं ॥ तेन दुर्लभतमत्वं तत्रैवास्तीति निष्पद्यते ॥ तत्रापि कुशावर्तएव ॥ गोदायास्तस्मादेव सरिद्वरत्वप्राप्तेः ॥ यथा "अंतर्धानं गते शंभौ कुशावर्तान्महानदी" तस्मादेव पुण्यदत्वमप्युपपद्यते ॥ त्र्यंबकक्षेत्रस्य महाक्षेत्रत्वं दीपत्वं च प्रतिपदोक्तं ॥ यथास्कांदे "काशीपुरी च

केदारो महाकालोथ नासिकं ॥ त्र्यंबकाख्यं महाक्षेत्रं पंचदीपा इमे भुवीति" ॥ किंच नासिकं तु केवलं क्षेत्रमिति भवत्संमतं भवद्ग्रंथे तथा दर्शनात् ॥ तीर्थदर्पणे ब्राह्मे "नासिकं च प्रयागं च पुष्करं नैमिषं तथा ॥ पंचमं च गयाक्षेत्रं षष्ठं पुत्र न विद्यते" ॥ अधुना तु भवद्भिरेव तारतम्यं विचारणीयं ॥ एकस्मिन्विषयेऽपि विशेषपुण्यदर्शनेनोपसंहारः प्रवर्तते ॥ यथा निर्णयसिंधौ ॥ मकर, कर्क-संक्र-मण-कालप्रकरणे ॥ वृद्धवसिष्ठः "त्रिंशत् कर्काटके पूर्व मकरे विंशती परे" इति तस्मादपि देवलयज्ञपार्श्वौ ॥ "यायाः संनिहिता नाड्यस्तास्ताः पुण्यतमाः स्मृताः" ॥ अत्रैकस्मिन्पर्वण्युपसंहारेण पुण्य-तमत्वं दर्शितमितिवत् ॥ ननु "मुंडनं चोपवासश्च गोदायां सिंहगे गुराविति" तथा "गंगाद्वारे प्रयागे च गंगासा-गरसंगमे ॥ कुशावर्ते च गोदायां बिल्वके नीलपर्वते ॥ कण्वाश्रमे च कौशिक्यां वा-राणस्यां घटाश्रमे ॥ एतेषु पितृतीर्थेषु श्राद्धमानंत्यमश्नुते" ॥ इति वचनयोर्गोदा-वर्यां प्रतिपदोक्त्या मुंडनोपवासश्राद्धानां पृथङ्निर्देशे कृते कुतस्तथा नेति-

वाच्यं १ ॥ तत्र मुंडनोपवासयोः कुशावर्ते सार्वकालत्वान्नाम नित्यत्वात् ॥ यथा "कुशावर्ते तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा भवंति ते" ॥ तथा "मूलमध्यावसानेषु गोदाऽलभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषतः" ॥ तथाच "प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं रौरवं चाऽधिगच्छति" ॥ पूर्वोक्तसिद्धांतेन मूलस्थकुशावर्तत्वात्तथा तत्प्रतिपदोक्तत्वाच्चोपरितनवचनैर्नित्यमुंडनादेः प्रतिपदोक्तत्वेन कुशावर्तविषये विधानात्तत्र तत्करणं नित्यमावश्यकं च निर्गलितं भवति ॥ यतः देवलस्मृतेस्तथोपरितनकुशावर्तविधायकवचनानां कालैक्यतोपि सामानाधिकरण्यं ॥ न तथा ॥ गोदायां सिंहगे गुराविति वचनस्य, तेन सर्वशब्द स्वरसतो गोदातीर्थप्रयुक्तमुंडनादिके सार्वकालं प्राप्ते ॥ तथा कौर्मे "नर्मदायां कुशावर्ते श्रीशैले भद्रकर्णिके ॥ वेत्रवत्यां विशेषेण गोदावर्यां विशेषतः" ॥ तथा नर्मदायां कुशावर्ते गोदावर्यां विशेषतः ॥ तथा च आचारदर्पणे "कुशावर्ते

च गोदायामित्यादिवचनैर्गोदायां तथा कुशावर्तेऽपि श्राद्धे पाक्षिके प्राप्ते यथाह वेदस्तुतिविषये सुबोधिनीव्याख्यायां “विधिरत्यंतमप्राप्तेर्नियमः पाक्षिके सति ॥ उभयोर्नियतः प्राप्तौ परिसंख्येति गीयत इति न्यायेन ॥ दुर्लभतमत्व, पुण्यतमत्वाद्यधिकफलरूपाऽप्राप्तांशपूरणात्तथा विशेषतो नाम मुख्यत्वेन शब्द-स्वरसतोपि मुंडनोपवासश्राद्धादीनि नियमेन कुशावर्ते कर्तव्यताकानीति नियमविधिः ॥ व्रीहीनवहंतीतिवत् ॥ स्वाध्यायोऽध्येतव्य इतिवच्च ॥ ननु “प्र-यागे वपनं कुर्याद्वाराणस्यां तनुं त्यजेदित्यनेन” सह “मुंडनं चोपवासश्च सर्व-तीर्थेष्विति वचने बहुव्रीहिणा सर्वतीर्थशब्दस्य यथा प्रयागमात्रपरत्वे गृहीते स्वार्थत्यागादिदोषत्रयमुत्पद्यते तथा प्रतिपदोक्तप्रसिद्धमहातीर्थेषु तत्रापि बव्हंतर्गततीर्थत्वेसतिप्रतिपदोक्तस्थलाधिकरणकतीर्थ एव मुंडनादिकमिति न सर्वत्रेति ग्रहणेन गोदातीर्थविषयेपि दोषत्रयं प्राप्नोतीति वाच्यं ॥ तन्न स्वार्थ-त्यागप्राप्तबाधपरार्थकल्पनेतिदोषत्रयाऽप्राप्तेर्नाम गोदांतर्गतमूलभूतप्रतिपदोक्त-

कुशावर्तप्रयुक्तोक्तत्वेन गोदाविषयत्वात् ॥ तथा गोदाभिन्नप्रतिपदोक्तसर्वतीर्थानां बाधाऽभावात् ॥ तथाऽनेकतीर्थप्राप्त्या बहुवचनविवक्षाऽदुष्टत्वात् ॥ ननु "कुशावर्ते तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा भवंति त "इति वचनस्य काम्यविषयत्वात्तस्य न नित्यमुंडनादिविधायकत्वमिति वाच्यं ॥ तन्न "प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं नरकं चाधिगच्छति" ॥ इति वचनेन गोदामूलं यत्कुशावर्त्ततीर्थं तत्र मुंडनादिकेऽकृते नरकप्राप्तिदोषदर्शनात् ॥ अतएव तत्र मुंडनादेर्नित्यत्वमावश्यकत्वं च किंच तत्र काम्यत्वाऽकाम्यत्व-योर्न क्षतिः मुंडनाऽऽदौ कृते पितरः शिवरूपा भवंत्येव वचनसामर्थ्यात् ॥ यथा दत्तकप्रकरणे विधवाया भर्तुः स्पष्टाऽनुज्ञां विनापि दत्तकग्रहणे तदधिकारः ॥ नापुत्रस्य लोकोऽस्तीति श्रुतिबलेन दोषदर्शने दत्तकग्रहणेन तद्दोषपरिहरणात् ॥ अथवा ज्योतिष्टोमेन स्वर्गकामो यजेतेत्यत्र श्रौतप्रकरणेऽकामनयाऽपि कृतकर्मणस्तत्फलप्राप्तिरित्युक्त-

त्वाच्च यथाऽन्नभक्षणेन निसर्गतस्तृप्तिः ॥ तथापि यात्रोद्देशं विना स्वोपजीवनसिद्धये राजकारणेन वा दैववशेन गोदायां यत्र कुत्रापि कस्मिन्नपि पुरुषे प्राप्ते सति श्राद्धादिकं फलकं तत्रापि जनस्थानवत् क्षेत्राधिकरणकगोदायां श्राद्धादिकमधिकफलदं स्यादन्यथा तस्या अनादरप्रसंगात् सिंहस्थिते सुरगुरौ तु द्रव्यशरीरदौर्बल्यान्निरुपायेन यत्र कुत्रापि गोदायां तत्समीपवर्तिना यात्रिकेण मुंडनादिकं कार्यं ॥ यथा पाद्मे "मुंडनं चोपवासश्च गोदायां सिंहगे गुराविति" तथा स्कांदे "मृत्युलोके समुत्पन्नो न कुर्यात्सिंहगे गुरौ ॥ गोतमीस्नानमात्रं तु स जीवन्मृत उच्यते" इत्यनेन मुंडनादेरुक्तत्वात्तथा जीवन्नपि मृतवदिति दोषश्रवणाच्च ॥ नायं मुख्यः पक्षः ॥ परं च संकटविषय इत्यर्थः ॥ तच्च दर्शनाऽव्यवहितं कार्यं नामपूर्ववन्न्यायेन यस्य यस्य तीर्थस्योद्देशेन कोपि यात्रिको विधिपूर्वकं यात्रायाः संकल्पं कृत्वा गृहान्निर्गतस्तेन पूर्वोक्तविशेषकारणं विना नामसंकटं विना प्रतिपदोक्तप्रसिद्धमहातीर्थानां

तत्रापि बव्हंतर्गतविशिष्टतीर्थत्वे सति प्रतिपदोक्तस्थलाधिकरणकतीर्थस्य दर्शन एवाऽनिवार्यनैसर्गिककार्यमंतरा दैवं मानुषं वा विघ्नंविनाऽन्यकार्याणि विहाय कर्तव्यताकमित्यर्थः ॥ नत्वप्रतिपदोक्तेषु तीर्थेषु तथा बव्हंतर्गततीर्थत्वे सति अप्रतिपदोक्तस्थलाधिकरणकतीर्थेषु दर्शनाऽव्यहितमुंडनस्य विषयत्वं ॥ तस्मिन्न–कृतेदोषश्रवणाऽभावात् ॥ तथा तस्य तत्र विवक्षाऽसत्वात् ॥ प्राप्तिपूर्वको हि निषेध इतिन्यायाच्च ॥ तेन गोदाविषये दर्शनाव्यवहितमुंडनादेर्विषयत्वं श्रीकुशावर्ततीर्थ एव ॥ एवंच यात्रोद्दिष्टप्रतिपदोक्ततीर्थादिकरणविवक्षया दर्शनाऽव्यवहितकालव्यवस्थेति सिद्धांत इत्यलं भूयसा. ॥

तत्रैव गोदानिर्णयचंद्रिकायां "यत्तु त्र्यंबकक्षेत्रवासिपंडितंमन्यैः प्रायोऽप्रामाणिकवाक्यसंग्रहरूपं गोदायात्राविवेकादर्शनामकं प्रकरणं विधायांकितं ॥ तत्र त्र्यंबकक्षेत्रवर्ति गोदायामेव मुंडनश्राद्धादि नान्यत्रेत्युक्तं ॥ तन्न ॥

पूर्वोक्तविधायकवाक्येभ्यस्तथार्थाप्रतीतेः” तदप्रयोजकं ॥ तत्रैव त्र्यंबकक्षेत्रवर्तिकुशावर्ततीर्थएव मुंडनश्राद्धादि नान्यत्रेति पूर्वमेव शास्त्राधारेण प्रतिपादनात् ॥ तथा गो० नि० चंद्रिका-ग्रंथस्य प्रस्तावनायां वेदशास्त्रसंपन्नैर्होशिंगशास्त्रिभिस्तथा धारणेशास्त्रिभिश्चशास्त्रपराङ्मुखतया केवलमल्पदृष्ट्या स्वकपोलकल्पिताऽप्रासंगिकशास्त्रार्थाः स्वग्रंथे लिखिता इत्युक्त्वाऽत्रापि त्र्यंबकक्षेत्रवासिपंडितंमन्यैरित्युक्तं ॥ तदप्यप्रयोजकं ॥ यतः धारणेशास्त्रिभिर्नाम त्र्यंबकक्षेत्रनिवासिभिर्धारणउपाव्हैरस्मद्गुरुवर्यैः प्रसिद्धैर्बाबाशास्त्रिभिः पूर्वोक्तप्रकरणं विधायांकितमिति ध्वन्यते ॥ परं च ते तु पंडितंमन्यशब्दस्य प्रतियोगी यः पंडितमान्यशब्दस्तदर्हा आसन् ॥ बडोदासंस्थाननिर्मितविद्वत्सभापरीक्षणे तत्सभाष्यव्याकरणशास्त्रपारंगतत्वप्रसिद्धेः ॥ तथाऽस्मिन् त्र्यंबकक्षेत्रे तीर्थोपाध्यायाधिकारसंबंधेन तेषां वेदशास्त्रांबुधिपारावारपारीणा इति ग्रंथकृत्स्वहस्तलेख्ये लिखितत्वात् ॥ अतएव इदं वचन-रचनं तु विवेचने

विश्रंभकमिति भाति ॥ तथैव होशिंगशास्त्रिणामपि पंडितमान्यत्वं गृह्यते ॥ तत्कृततीर्थदर्पणग्रंथस्य प्रामाण्यत्वेन भवत्सदृशानां पंडितानां स्वग्रंथे परिग्रहात् ॥ यथा गो० नि० चंद्रिकायामपि तीर्थदर्पणे ब्राह्मे "नासिकं च प्रयागं च पुष्करं नैमिषं तथा ॥ पंच-मं च गयाक्षेत्रं षष्ठं पुत्र न विद्यते" ॥ इत्यादीनि वचनानि तेन गो० नि० चं० कृतामुभयेषां विषयेप्यसूयैव ध्वन्यते ॥ तत्रैव "प्रायोऽप्रामाणिकवाक्यसंग्रहरूपं प्रकरणं विधायांकितमित्युक्तं" तदप्ययुक्तं प्रमाणदर्शनाऽसत्वात् ॥ कस्याऽपि ग्रंथस्य सप्रमाण-तया खंडनं विना कस्याऽपि स्वोक्तिः प्रमाणाय न भवतीत्यलं ॥

गो० नि० चं० नवमपृष्ठे "तत्र त्र्यंबकक्षेत्रवर्तिगोदायामेव मुंडनश्राद्धादि नान्यत्रेत्युक्तं ॥ तन्न पूर्वोक्तमुंडनवाक्येभ्यस्तथाऽप्रतीतेरित्युक्तं" ॥ तदसत् ॥ यतः पूर्वोक्तस्कांद, शिवपुराण, ब्रह्मोत्तरखंड, कौर्मवचनानां प्रामाण्यात् ॥ तथा गोदाकुशावर्तयोर्व्यापक-व्याप्यभावात् ॥ ननु पूर्वोक्तत्र्यंबकादपि स-

त्तीर्थमित्यस्य तथा "प्रमादाद्यो नरो मूलं हित्वेत्यस्य वचनस्य नरकादिप्राप्ति-
रूपार्थवादकत्वात्तथा "कुशावर्ते तु ये राजन्निति वाक्यस्य स्तावकवाक्यव-
त्वाद्धाऽप्रामाण्यं त्यागश्च कुतो नेति वाच्यं १ ॥ तन्न ॥ अर्थवादपराणां स्ताव-
कानां चर्षिवाक्यानां प्रामाण्यांगीकारात् ॥ मनुस्मृतिटीकायां यदाहुः कु-
ल्लूकभट्टाः "अर्थवादानामपि विध्यैकवाक्यतया स्तावकत्वेन धर्मे प्रामाण्यं"
यदाह जैमिनिः "विधिना त्वेकवाक्यत्वात् स्तुत्यर्थेन विधीनां स्युः" ॥ वि-
स्तरेणालं ॥ पूर्वोक्त-विशेषवचन-तारतम्येन बहुग्रंथसंमत्या दुर्लभत्वादिगुण-
वैशिष्ट्येन विशेषफल-दातृत्वेन च श्रीकुशावर्त एव मुंडनश्राद्धे सिद्धे कथमर्था-
प्रतीतिरिति वयं न जानीमः ॥

तस्मिन्नेव पृष्ठे "गोदाया एव प्रसिद्धमहातीर्थत्वं स्वनाम्ना समुद्रगामित्वात् ॥
तदंतर्गतकुशावर्तस्य त्ववांतर-तीर्थत्वं ॥ तस्य गोदानाम्ना समुद्रगामित्वेपि
कुशावर्तेन तत्वाऽभावात्" ॥ इत्युक्तं ॥ तन्न ॥ यतः केवलं गोदाशब्दस्यार्थ-

स्वरसतो नाम्ना वा न तस्या महातीर्थत्वं नाम महानदीत्वं प्राप्तं ॥ केनापि नाम्ना, कस्या अपि नद्याः केवलं समुद्रगामित्वादेव महानदी-संज्ञोपपद्यते ॥ यथा निर्णयसिंधौ त्रिस्थलीसेतौ सामान्यप्रघट्टके च नदीनां रजस्वलात्वकथने" "सिंहकर्कटयोर्मध्ये सर्वा नद्यो रजस्वलाः ॥ तासु स्नानं न कुर्वीत वर्जयित्वा समुद्रगा" इतिव्याघ्रोक्तेः ॥ इदं क्षुद्रनदीषु तस्मादसमुद्रगानां क्षुद्रत्वं ध्वन्यते ॥ तथाच "सर्वाः समुद्रगाः पुण्याः सर्वे पुण्या नगोत्तमा" इति। अपि च गोदायाः कुशावर्तादेव महानदीत्वं ॥ तस्य महानदीसंज्ञाजनकत्वात् ॥ यथा स्कांदे "अंतर्धानं गते शंभौ कुशावर्तान्महानदी ॥ शरच्चंद्रमरीच्याभैः प्रवाहैः सागरं ययौ" ॥ तेन गोदानाम्ना महानदी-संज्ञाजनक-कुशावर्तरूपप्रवाहेणाऽऽसमुद्रपर्यंतं गोदायाः कुशावर्तत्वमुत्पद्यते ॥ यथा ॥ एकगोत्रोत्पन्नानां पुरुषाणां नामभिन्नत्वेनापि तेषामेक-गोत्रित्वं ॥ तथाच ॥ गोदामाहात्म्ये ब्राह्मे "मुने कुशं समादाय इत आव्हानयस्व भो ॥ तथा चक्रे स हि मुनिस्ततः प्रादुर्बभूव सा" एतावता गौ-

तमकरणस्य कुशावर्तस्य गोदाजनकत्वं जन्यसापेक्षं तस्माद्गोदांतर्गतकुशा-
वर्तव्यतिरिक्तानां सागरावध्यन्यतीर्थानां जन्यत्वं ॥ "आत्मा वै पुत्र नामा-
सीति" श्रुतेः ॥ तथापि पितृ-पुत्र-योरधिकारविषये भिन्नत्वं ॥ "अग्रासनं तु
पितुरेवेतिन्यायात्" भीमरथी तु पंढरीपत्तने चंद्रभागानाम्ना प्रसिद्धा ॥ तस्या
अपि भीमरथीत्वं न दुष्यते तथैव कुशावर्तस्य ॥ तथाच एकस्या
एव भागीरथ्या अनेकनामानि संति ॥ यथा भीष्मसूः त्रिपथगेत्यादिपरं च
एतन्नामभिर्महानदीत्वं तस्या नोपपद्यते ॥ तर्हि ॥ समुद्रगामित्वे-नैवालं
भूयसा ॥

तत्रैव "एवं च कुशावर्तेऽपि गोदात्वेनैव मुंडने सिद्धे तुल्यं न्यायान्मूल-
मारभ्य सागरपर्यंतं यत्र कुत्रापि गोदायां मुंडनप्राप्तेर्युक्तत्वात् ॥ ननु पुष्क-
रइव कुशावर्तेपि गोदाभिन्नत्वेन मुंडनं कुतो नेति वाच्यं ॥ किंच॥ कुशावर्ते
तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा भवंति त इति

गोदायात्राविवेकादर्शलिखितं कुशावर्ताऽधिकरणकमुंडनविधायकं सौरपुराणोत्तरार्धस्थं प्रमाणिकं चेत् गोदात्वेनैव विधायकं न कुशावर्तत्वेन" इत्युक्तं भवति ॥ तन्न तथा ॥ यद्यपि पूर्व-न्यायेन गोदावर्याः कुशावर्त-त्वं तथा कुशावर्तस्य गोदात्वं सिध्यति ॥ तथापि तयोरंगांगिभावेन जनक-जन्यसंबंधेन च कुशावर्तस्य जनकस्थानापन्नत्वात्तस्याऽग्रपूज्यत्वं ॥ तथा कुशावर्ते तु ये राजन्निति सौरपुराणस्थविशेषवचनस्य प्रतिपदोक्तत्वेन कुशावर्तमात्रपरत्वात्तथा प्रमादाद्यो नरो मूलमित्यनेन मूलमात्रपरत्वान्नाम तत्स्थानापन्नत्वेन कुशावर्तमात्रपरत्वात् ॥ तथा प्राग्दत्त "त्र्यंबकं चाब्जकमित्या" रभ्य "अब्जके सिंधुसंगे च सर्वत्र सुलभापि ही"-ति वचनद्वयेन सह 'मूलमध्यावसानेषु गोदालभ्या कलौ युगे ॥ मुडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषत' इति वचनस्य क्रमेण समन्वयेन कलियुगे तु मूलभिन्नगोदांतर्गतान्यसर्वतीर्थानां दुर्लभतमत्व, पुण्यतमत्वाधिकफलदातृत्वादिगुणविरहेणाऽत एव तेषां संकोचाद्गोदा-प्रयुक्तमपि

मुंडनादिविहितत्वं भागीरथ्यंतर्गतप्रयागमणिकर्णिकातीर्थवद्विशेषविधानात् तयोर्नाम कुशावर्तगोदयोर्व्याप्यव्यापकभावेन न यत्र कुत्रापि गोदायां ॥ परंच मूलभूते कुशावर्त्त एव तत्संगच्छते ॥ कुशावर्तस्य गोदात्वेनांगीकारेपि "दशपंचधनुः—प्रमाणमूर्ध्वमवनौ षष्ठिधनुष्परिमितविस्तृतं गौतमकृतार्थताहेतु-भूतं गोदायामंतर्धानायां सत्यां गौतम-प्रार्थना-दिभिः कुशेन परिवृतं पुन-रुत्पत्तिमूलभूतं महानदी-संज्ञा-जनकं यद्गोदाधिकरणं तत्कुशावर्तं" तस्मात्कु-शावर्ते तु ये राजन्निति वचनेन तथा मूल-प्रति-पादक-पूर्वोक्तवचनद्वयस्वार-स्यादपि कुशावर्तसंज्ञकगोदाधिकरणस्यैव मुंडनादेर्व्यापित्वं संगतं भवति ॥ नान्यत्र गोदायां ॥ तेन ग्रंथकृच्छंकासमाधाने पांडित्यमात्राऽऽभासके इत्यलं ॥ तत्राप्युत्तरार्धे "अत एव कुशेनावर्तिता यत्र गौतमेन च गौतमी॥ कुशाव-र्त-मिति ख्यातं ब्रह्मघ्नादिविशुद्धिकृदिति ॥ स्कंदपुराणस्थं करणाधिकरणो-पाधिकं गोदायाः कुशावर्तेति नामकथनं संगच्छते ॥ न च तस्य महानद्यं-

तर्गतत्वेनाऽवांतरतीर्थत्वेपि तत्प्रयुक्तं भिन्नं मुंडनं कुतो नेति वाच्यं” ॥ इत्युक्तं तदप्ययुक्तं ॥ यतस्तूपरितनम् गो-नि-चंद्रिकादत्तवचनं तु मत्पूर्वोक्तानां कुशावर्तस्य दुर्लभत्वाऽसदृशत्वविशिष्टगुणदर्शकानां वचनानां ब्रह्मघ्नादिविशुद्धिकृदिति तस्य विशेष्यविशेषण-भावेन स्वरसतोऽर्थगौरवाद्गुणक्रमेव जातं ॥ कुशावर्ते-तीत्यपेक्षया कुशावर्तमिति सुवचं ॥ तथाच मत्पूर्वोक्तस्कांद-कौर्मशिवपुराणस्थ-विशेषवचन-विहितमुंडनं कुशावर्ताऽवच्छिन्नगोदांतर्गततीर्थेषु तु प्रतिपदेनानुक्तत्वाद्भिन्न-मुंडनाऽप्रसंगः ॥ तत्तु श्रीकुशावर्तमात्रमिति पूर्वपक्षोत्तरपक्षयोः सूत्तरं ॥ स्कंदपुराणवचनोक्तकुशकरणेन कुशावर्तस्य न महत्वं तर्हि दुर्लभादिगुणवैशिष्ट्येन तथा मान्यगुणोपेतत्वात्सातिशयफलवत्त्वाच्चाधिकरणस्य पूज्यत्वं प्राशस्त्यंच ॥ तेन करणाधिकरणाभ्यां कुशावर्तस्य मुंडनविषये का हानिः स्यात् ॥ कापि नेति निष्कर्षः ॥

तत्राप्युत्तरार्धे “भवत्कृत—गोदायात्राविवेकादर्शसंबंधितीर्थश्राद्धप्रकरणे

लिखितत्वेन भवत्संमतस्य 'उपवास मुंडने सकृदेवकार्ये, तयोर्व्यापकतीर्थोपा-
ध्यवच्छेदेन विधानाच्छ्राद्धमात्रं कार्यमिति महाप्रामाणिकमीमांसकाचार्यत्रिस्थ-
लीसेतुकृदुक्तसिद्धांतस्य दत्तजलांजलितापतेः" ॥ इत्युक्तं तदसत् ॥ भिन्नवि-
षयत्वात् ॥ यत्तः उपवासमुंडने सकृदेवकार्ये इत्यस्य तु काश्यादिषुवदनेक-
तीर्थानां संपाते तयोर्व्यापकत्वादेकस्मिन् दिन एकस्थल एककतुर्विषयत्वमिति
त्रिस्थलीसेतुकृद्या-ख्यानस्य भावः ॥ तस्माद्विषयाद्गोदायां प्रतिपदोक्तकुशा-
वर्त-तीर्थ-प्रयुक्तोपवास-मुंडनयोर्नासिक-प्रतिष्ठान-नांदेडादिगोदांतर्गतान्यती-
र्थानां कोपि संबंधो नास्ति ॥ भिन्नकालभिन्नस्थलत्वादत एव संपा-
ताऽभावाच्च ॥ अतएव भिन्नविषयत्वं ॥ इदानीं तु व्यापक-तीर्थे मुंडनो-
पवासश्राद्धानि कृतानि चेतद्व्याप्यतीर्थकृतसिद्धिस्तथा व्याप्य-तीर्थे तानि कृ-
तानि चेत्तद्व्यापकतीर्थकृततत्सिद्धिर्भवति वा नवेतीति पूर्वपक्षः ॥ अस्मिन्विषये
व्यापकं गोदातीर्थं व्याप्यं तु तीर्थराजकुशावर्तगोदाप्रयुक्तंमुडनोपवासौ तु

सिंहस्थिते सुरगुरावेवोक्तौ यथा पाद्मे "मुंडनं चोपवासश्च गोदायां सिंहगे गुराविति" श्रीमत्कुशावर्तमहातीर्थप्रयुक्तौ तु सार्वकालं दुर्लभतमत्वादिगुणवैशिष्ट्यात्तत्राकृतत्वे दोषपठणाच्च कलियुगे तौ नित्यं कर्तव्यताकौ॥यथा सौरपुराणे "कुशावर्ते तु ये राजन् वपनमिति स्कांदे सह्याद्रिखंडे" "कुशावर्तसमं तीर्थं नास्ति ब्रह्मांडगोलक इति" "मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यादिति ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभापिहीति ॥ प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक्॥ करोति मुंडनं श्राद्धं नरकं चाधिगच्छतीति ॥ देवलः "मुंडनं चोपवासश्चेति ॥ तेन दुर्लभत्वादितारतम्येन सिंहस्थाऽपेक्षया सार्वकालत्वेन कलियुगे तयोस्तथा श्राद्धस्यापि कुशावर्ते विशेषविधानात् व्याप्यतीर्थं यत्कुशावर्तं तत्र मुंडनोपवासकरणेन व्यापकतीर्थं यद्गोदातीर्थं तत्प्रयुक्तमुंडनोपवाससिद्धिः स्यात्सिंहस्थगुरावपि ॥ परं च कुशावर्तभिन्नगोदांतर्गतान्यतीर्थेषु तत्करणेन दुर्लभतमत्वफलातिशयत्वादि-

गुणविरहात्तयोरसिद्धिः ॥ अत एव कुशावर्त एव मुंडनोपवासयोः सार्वकालं प्रसक्तिर्नान्यत्र ॥ गोदायां श्राद्धविषये त्वनेकनिमित्तप्रयुक्तश्राद्धस्य यथैकदिन एकस्थलेपि प्रतिश्राद्धाऽऽवृत्तिः ॥ यथा सांवत्सरिकतीर्थश्राद्धयोरावृत्तिर्भवति ॥ तथैकदिन एकस्थल एकनिमित्तकानेकसंपाते विशेषविधानं विना नावृत्तिः ॥ काश्यां विशेषविधानात्पंचक्रोशीयात्रानिमित्तकश्राद्धानि दशमासाऽभ्यंतरेपि पृथक् भवंतीति महाप्रामाणिकमीमांसकाचार्यत्रिस्थलीसेतुकृदुक्तसिद्धांतः ॥ तेनैव भिन्नस्थाने भिन्नकाले व्याप्यव्यापकयोस्तीर्थयोरुभयत्रापि सति विधाने निमित्तभेदेन वा पृथक्श्राद्धं दशमासाऽभ्यंतरेपि कृतं चेत्तथा फलेच्छया कृतं चेन्महाप्रामाणिकमीमांसकाचार्यत्रिस्थलीसेतुकृदुक्तसिद्धांतस्य दत्तजलांजलितापत्तिर्न स्यादिति समाधानं ॥ तथैव ॥ गोदाविवेकादर्शग्रंथस्याऽभिप्रायो ध्वन्यते ॥

गो० नि० चंद्रिकायां तत्रापि "स्मृतमात्रस्तदा तत्र आविरासीत्कृपानिधिः ॥

स त्र्यंबक इति प्राह गौतमं मुनिभिर्वृत्तं ॥ द्विहस्तमात्रे तीर्थानि संभविष्यंति गौतम ॥ सर्वत्राहं संनिहितः सर्वकामप्रदस्तथेति ब्रह्मपुराणस्थगौतमवरदानविषयकशिववाक्येन मूलमारभ्य सागरपर्यंतं गोदायां द्विहस्तदघ्ने भागेभिन्नाऽवांतरतीर्थानां कुशावर्तस्यैव ॥ ब्रह्मपुराणप्रसिद्धत्र्यंबककपोतादिनामकतीर्थानां च ॥ विद्यमानत्वेनैकस्मिन्नपि दिने एकस्याऽसंख्यातवैधमुंडनप्राप्त्याऽनवस्थापत्तेश्च ॥ किंच ॥ गोदावरी भीमरथी तुंगभद्रा च वेणिका ॥ तापी पयोष्णी विंध्यस्य दक्षिणे तु प्रकीर्तिताः ॥ भागीरथी नर्मदा च यमुना च सरस्वती ॥ विशोका च वितस्ता च हिमवत्पर्वताश्रिताः ॥ इति त्रिस्थलीसेत्वादिधृतब्रह्मपुराणवचनपरिगणितमहानदीनां तुल्यत्वेपि गोदातिरिक्तासु मुंडनं चोपवासश्च सर्वतीर्थेष्वयं विधिरिति मुंडनविधेरासमुद्रं सामान्यतः प्रवृत्तिर्गोदायां तु मूलस्थान एवेत्यत्र किंविनिगमकमिति त एव प्रष्टव्याः । त्र्यंबकक्षेत्र एव मुंडनमित्यत्र स्कंदपुराणस्थं वाक्यद्वयमुपष्टंभकत्वेन दत्तं ॥

तच्च ॥ मूलमध्यावसानेषु गोदाऽलभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषतः ॥ प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं रौरवं चाधिगच्छति ॥ अत्र उच्यते ॥ अनयोर्वाक्ययोः प्राचीनस्कंदपुराण-पुस्तकेष्वदर्शनादप्रामाण्यं" ॥ इत्युक्तं ॥ तदसत् ॥ यद्यपि स्मृतमात्र इति वचनद्वयेन गोदायाः सर्वत्र द्विहस्तदघ्ने भागे तीर्थत्वं प्राप्य सर्वकामदस्य श्रीमत्त्र्यंबकराजस्य सांनिध्यात्कुशावर्तस्यैकदेशेन साम्यं सर्वेषामपि गोदां-तर्गततीर्थानां प्राप्नोति तथापि कुशावर्तस्यैव मुंडनोपवासयोर्व्यापकत्वं नेत-रेषां तत् प्रतिपदोक्तत्वाऽकथनात् गोदायां प्रथमत्र्यंबकादिकृत्तिकांततीर्थपंच-कस्य कुशावर्तान्महानदीति-वचन-प्रामाण्येन महातीर्थत्वाऽसत्वात्तथा तस्य विषये तयोर्व्यापकत्वाऽकथनात् ॥ कुशावर्तविषये तु तदस्त्येव ॥ सौरपुरा-णस्य कुशावर्तेतु ये राजन् वपनं चेति वचनसामर्थ्यात्तथोपरितनस्कांद-वचनद्वयस्य त्र्यंबकं चाब्जकं चाब्धेरित्यारभ्य तस्मात्-त्र्यंबक एवैषेति स्कां-

द्वचनेन सह समन्वयत्वात् ॥ तथा साम्यात् ॥ तथा द्विहस्तमात्रइति वचन-
द्वयस्य मुंडनादि-विधायकासत्वात् । सर्वतीर्थेष्वयं विधिरिति वचनसंबं-
धेन भवद्ग्रंथे प्रसिद्धमहातीर्थेष्विति लिखितत्वेन तस्य स्पष्टप्रतिपत्तिप्रसंगे
महाप्रामाणिकमीमांसकाचार्यत्रिस्थलीसेतुकृदनुयायित्वेन प्रतिपदोक्तप्रसिद्ध-
महातीर्थेष्वित्यनेकतीर्थोपसंहारेण सिद्धांतितत्वाच्च किंच कुशावर्तभिन्न-
गोदांतर्गतानेकान्यतीर्थप्रयुक्तमुंडनादेरप्राप्त्यानाऽनवस्थाप्रसंगः मूलमध्येति
तथा प्रमादाद्यो नरो मूलमिति वचनद्वयस्य प्राचीनस्कंदपुराणपुस्तकेष्वदर्श-
नमतएवाप्रामाण्यत्वमिति कथनं तु सर्वज्ञत्वविषयं तयोर्वचनयोः कदा-
चिदधुनाऽनुपलब्धत्वसंभवात् कस्यचित् प्राचीनपुस्तके तत्त्रुटितत्वसंभवाद्वा ॥

दशमपृष्ठे "यदि च प्रामाण्यमंगीक्रियते तदापि त्र्यंबकक्षेत्र एव मुंडन-
मिति ताभ्यां वचनाभ्यां प्रतीयते" इत्युक्तं तन्न युक्तं मूलमध्याऽवसानेष्विति
वाक्येन सह त्र्यंबकं चाब्जकमित्यारभ्य तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां

वरेति वाक्यस्य तथा प्रमादाद्यो नरो मूलमिति वाक्यस्य कुशावर्ते तु ये राजन्निति वाक्येन सह समन्वयात् त्र्यंबकक्षेत्रस्थकुशावर्त एव मुंडनमिति संगतं स्यादेव तस्मान्मूलस्थानव्यापकमुंडनोपवासयोर्विषये शंकाऽपास्ता ॥ मूलंनाम कुशावर्तमेवेत्यग्रे वक्ष्यामः ॥

दशमपृष्ठस्योत्तरार्धे "तथाहि मूलं ब्रह्माद्यधिकरणक-गोदोत्पत्तिस्थानं ॥ केचित्तु ॥ त्र्यंबकक्षेत्रवर्ति कुशावर्तं मूलस्थानं वदंति ॥ तत्तुच्छं तस्य तत्वाऽभावादित्युक्तं" ॥ तदसत् ॥ कुशावर्तस्य महानदीसंज्ञाऽऽरंभत्वात्तथा गौतममहर्षिकृतार्थत्वहेत्वंतर्धानं-गताया गोदायास्तस्य पुनरुत्पत्त्यधिकरणकत्वात्तथा च गो° नि° चंद्रिकासंमतब्रह्माद्यधिकरणकगोदोत्पत्तिस्थानभूतं त्र्यंबकतीर्थं हित्वा गोदायात्रांगमुंडनादिकरणविषये कुशावर्तस्य प्रतिपदोक्तत्वेन विधानात् ॥ यथा ब्राह्मे गोदामाहात्मे "कुशावर्तमिति ख्यातं नराणां सर्वकामदं ॥ कुशेनाऽऽवर्तितं यत्र गौतमेन द्विजन्मना । न तत्कल्पसहस्रेण न च कल्पशतेन च ॥

कुशावर्तस्य माहात्म्यमहं वक्तुं न ते क्षमः ॥ गौतमस्य तपस्वित्वात् स्तुत्या च त-
पसा तथा ॥ स्रोतोरूपेण सा गंगा गां गता त्रिदशाऽऽपगा ॥ त्रयाणामपि लोकाना-
मुपकारहिताय च ॥ कृतार्थं गौतमं श्रुत्वा गौतम्यंतर्दधे तदा ॥ ततः समभवद्विश्वं
शून्यभूतमिवाखिलं ॥ अंतर्हितायां गंगायां सर्वे मुनिगणास्तदा ॥ प्रभावमपरिच्छेद्यं
गंगायाः कल्मषापहं ॥ विचार्योद्विग्नमनसो गंगा सर्वात्मना गता ॥ गौतमं प्रेरयामासु-
र्गंगामानय माचिरं ॥ जपैश्च नियमैः स्तुत्या यत्नं कुरु यतात्मवान् ॥ गौतमोपि तत-
श्चक्रे स्तुतिमेतामनुत्तमां ॥ तदा प्रसन्ना सा गंगा वागुवाचाशरीरिणी ॥ मुने कुशं स-
मादाय इत आव्हानयस्व भो ॥ तथा चक्रे स हि मुनिस्ततः प्रादुर्बभूव सा ॥ कुशा-
वर्ते ततस्तीर्थे देवानामपि दुर्लभं ॥ तत्र स्नात्वा च पीत्वा च ब्रह्महत्यां व्यपोहति" ॥
तथा स्कांदे सह्याद्रिखंडे गोदोत्पत्तिप्रसंगे "गुप्ता-तलांतरेणैव गोदा सा त्रपयान्विता ॥
तामालोक्य मुनिं प्राह सोमः सोमार्धशेखरः ॥ मुने तनुकुशाग्रेण भूमौ द्रक्ष्यसि
गौतमीं ॥ कुशेनाऽऽवर्तिता मंत्रैश्चिद्रसा मुनिना यतः ॥ कुशावर्तमिति ख्यातं तीर्थं

तत्रातिपावनं ॥ तत्र दृष्ट्वा महागंगां प्रकटां परमेश्वरीं ॥ तस्यां स्नात्वातिसंतुष्टा देवासुरमुनीश्वराः ॥ कुशावर्ते परिक्रम्य पावनं जगति स्फुटं ॥ स्तुत्वा मंत्रैर्वेदविदो मुनयो वा मुनीश्वराः ॥ अंतर्धानंगते शंभौ कुशावर्तान्महानदी ॥ शरच्चंद्रमरीच्याभैः प्रवाहैः सागरं ययौ ॥ कुशावर्तसमं तीर्थं नास्ति ब्रह्मांडगोलके ॥ मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ त्र्यंबके चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभापि हि ॥ अत्र त्र्यंबके नाम त्र्यंबकक्षेत्रे नतु त्र्यंबकतीर्थं ॥ तस्य सरिद्वरत्वाऽप्राप्तेः ॥ उत्पन्ना गौतमी यत्र यत्राहं त्र्यंबको गिरिः ॥ यत्र तीर्थं कुशावर्तं तस्मान्नातः परं गुह ॥ अत्रापि कुशावर्तस्याऽसदृशत्वं ध्वनितं भवति ॥ निर्णयसिंधौ श्राद्धप्रकरणे "सह्यस्य चोद्भवो यत्र यत्र गोदावरी नदी ॥ पृथिव्यामपि कृत्स्नायां स प्रदेशोतिपावनः" ॥ सौरपुराणे "कुशावर्ते तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां

पितरः शिवरूपा भवंति ते" ॥ तथा कौर्मे त्रिस्थलीसेतौ श्राद्धप्रकरणे "नर्मदायां कुशावर्ते गोदावर्यां विशेषतः" ॥ इत्यादीनि वचनानि गोदोत्पत्तिविषये कुशावर्तपराणि संति ॥ अत्रोच्यते ॥ उपयुक्त ब्राह्मस्कांदस्थवाक्यैर्यद्यपि न सर्वशस्तथाऽप्यंतर्धानपुनरुत्पत्तिविषय उभयोः पुराणयोरैक्यं स्पष्टं भवति नाम गोदायामंतर्हितायां कुशसहिताऽऽह्वानेन कुशकरणकभूविदारणेन गोतमस्तुतिनिमित्तेन वा गोदायाः कुशावर्त एव प्रादुर्भावो जातः ॥ तथा कुशावर्तान्महानदीति वचनेन महानदीत्वमपि प्रादुर्भूतमिति निष्पद्यते ॥ अतएव कुशावर्तमेव महानदीगोदाया मूलस्थानं न ब्रह्मग्राधिकरणक-गोदोत्पत्तिस्थानं गोदायात्रांगमुंडनोपवासश्राद्धविषयं मूलं तस्य महानदी संज्ञाऽभावात् ॥ अत-एव महानदीनिमित्तमुंडनोपवासश्राद्धाऽनर्हत्वात् ॥ तद्विषये ऽविधानाच्च ॥ तत्रैव "अत एव ब्रह्मपुराणस्थे गोदामाहात्म्ये कुशावर्तस्य षष्ठतीर्थत्वकथनं संगच्छते ॥ तथाहि तत्र गोदाप्रादुर्भावानंतरं 'पृथक्तीर्थफलं

श्रोतुं प्रवृत्तं मम मानसं ॥ क्रमशो ब्राह्मणाऽनीतां गंगां मे प्रथमं वद ॥ पृथक्तीर्थ-
फलं पुण्यं सेतिहासं यथाक्रमामिति' ॥ यथाक्रमतीर्थफलकथनविषयकनारदप्रश्ने
तानि वक्ष्यामि संक्षेपान्नमस्कृत्वा त्रिलोचनं ॥ यत्रासौ भगवानासीत् प्रत्यक्षस्त्र्यंबको
मुने ॥ त्र्यंबकं नाम तत्तीर्थं भुक्तिमुक्तिप्रदायकं ॥ वाराहमपरं तीर्थं त्रिषु लोकेषु वि-
श्रुतं" ॥ इत्यादिना १ त्र्यंबक २ वाराह ३ कपोत ४ कार्तिकेय ५ कृत्तिका-
नामकपंचतीर्थान्युक्त्वाऽग्रे कुशावर्ततीर्थकथनं कृतं ॥ अन्यथा यथाक्रममुत्तरे
प्रवृत्तस्य ब्रह्मणः कुशावर्तं प्रथममेव वक्तव्यं स्यादितिदिक्" इत्युक्तं तन्न तथा
अत्रोच्यते उपरितनसिद्धांतेन कुशावर्तस्य पुनरुत्पत्तिस्थानभूतत्वेन तथा
महानद्याऽऽरंभजनकत्वेन मूलत्वे सिद्धे कथं तस्य षष्ठतीर्थत्वं संभवेत् १ तन्न
स्यात् गोदोत्पत्तिकालादारभ्य सागरागमनकालपर्यंतं पुरावृत्तकथनप्रसंगेन
यस्मिन् यस्मिन् स्थले यद्यज्जातं क्रमेण नारदप्रश्ने तत्तदुत्तरद्वारा ब्रह्मणा
कथितं तत्र तेन त्र्यंबकतीर्थस्य प्राथम्यमुक्तं तत्तु केवलं गर्भोत्पन्नक्षरणवज्जा-

तन्मृताऽऽपत्यप्राथम्यवद्धा तथा तीर्थपंचकस्यापि महानदीसंज्ञित्वपंचत्वेन नाम-
पंचकत्वं कुशावर्तान्महानदीति स्कंदपुराणउक्तत्वात्तथाच यथागर्भस्य पुंसव-
नादिसीमंतोन्नयनसंस्कारा जातमृतत्वेन वाचनिका नाम व्यर्थास्तथा गो-
दायाः प्रथमतीर्थपंचकस्य सेतिहासक्रमपुण्यफलादिकथनं पुरावृत्तकथनमात्रं
एतावता गौतमकृतार्थताहेतुभूतगोदांतर्धानत्वेनैव तत्पंचकस्य समुद्रगामि-
त्वविरहजनितमहानदीसंज्ञित्वाऽ–भावान्नामशेषत्वं तथा तत्संबंधिमुंडनाद्यपि
तथैव सर्वमपि वाचनिकमित्यर्थः इत्येकःपक्षः ॥ अथवाद्विजकुलोत्पन्नपुरुषस्यो-
पनयनउक्तकालमकृते सति व्रात्यत्वान्नाम पतितसावित्रीकत्वाद्विजत्वं नोपप-
द्यते तथा सर्वकर्माऽनर्हत्वं च यथा आश्वलायनसूत्रे "अष्टमे वर्षे ब्राह्मणमुपनये-
द्गर्भाष्टमे वैकादशे क्षत्रियं द्वादशे वैश्य-मा-षोडशाद्ब्राह्मणस्याऽनतीतः काल आद्वावि-
शात् क्षत्रियस्याऽऽचतुर्विंशाद्वैश्यस्याऽत ऊर्ध्वं पतितसावित्रीका भवंति ॥ नैनानुपनये-
न्नाध्यापयेन्न याजयेन्नैभिर्व्यवहारेयुरिति" नाम द्विजातीनां वर्णानुक्रमेण अष्टैका-

दशद्वादशवर्षपर्यंतं षोडश, द्वाविंशच्चतुर्विंशद्वर्षपर्यंतं वा उपनयनं न जातं चेदूर्ध्वं द्विजातयः पतित-सावित्रीका भवंति ॥ उपनयाऽध्यापनयाजनादि सर्वव्यवहारा अनर्हा इत्यर्थः ॥ तथा गोदाया अंतर्धानत्वेन तीर्थपंचकस्य गोदानाम-शेषत्वात्तथा तस्याः समुद्रगामित्वेन महानदीसंज्ञा-बहिर्मुखत्व-प्राप्त्याऽधिकरणरूपेण सति विद्यमानत्वेपि प्रथमद्वितीयेत्यादिक्रमोपि नामाऽविशिष्टः तस्माद्देव तद्व्यापकमुंडनादिक्रियाराहित्यमप्यधुना निष्पद्यते ॥ इति द्वितीयः पक्षः ॥

अपि च यथा ब्राह्मणकुलोत्पन्नपुरुषस्योपनयनसंस्कारेण द्विजत्वं नाम द्वितीयं जन्म तेन तथा ब्रह्मवर्चस्वित्वेन सर्वेभ्योऽपि वर्णेभ्यः श्रेष्ठत्वं सर्वकर्मसु तत्पूज्यत्वं चोपपद्यते तथा ब्रह्मपुराण एवाऽन्यत्र 'पंचानामपि भूतानामापः श्रेष्ठतमा मताः ॥ तत्रापि तीर्थभूतास्तु तस्मादापः पराः स्मृताः ॥ तासां भागीरथी श्रेष्ठा तस्या या गौतमी त्वया ॥ आनीता सा तदा गंगा अस्या नान्यच्छुभा-

वहं' ॥ स्कांदे अंतर्धानं गते शंभौ कुशावर्तान्महानदीति' ॥ मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ त्र्यंबकं चाब्जकं चाब्धेः संगमाख्यं च जन्मिनां ॥ अतःस्थानत्रयं त्वेतद्दुर्लभं मम वारिधे ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभापि हि ॥ मुने तनुकुशाग्रेण भूमौ द्रक्ष्यसि गौतमीं ॥ कुशेनाऽऽवर्तिता मंत्रैश्चिद्रसा मुनिना यतः ॥ कुशावर्तमिति ख्यातं तीर्थं तत्राऽतिपावनं' ॥ तथा ब्राह्मे 'मुने कुशं समादाय इत आव्हानयस्व भो ॥ तथा चक्रे स हि मुनिस्ततः प्रादुर्बभूव सा ॥ कुशावर्तं ततस्तीर्थं देवानामपि दुर्लभं' ॥ इत्यादिना ॥ पंचभूतेभ्य आपः श्रेष्ठास्तासां तीर्थभूतास्तु श्रेष्ठतरास्तासां भागीरथी तस्या गोतमेनाऽऽनीता गोदा श्रेष्ठतमा तस्यामपि त्र्यंबकादिस्थानत्रये सा दुर्लभा तस्मादपि स्थानत्रयात् त्र्यंबके नाम त्र्यंबकक्षेत्रे दुर्लभतरा तत्रापि पुनः प्रादुर्भावस्थानं यत्कुशावर्तं तत्र दुर्लभतमा श्रेष्ठ-तमा च गौतमाऽऽनीतत्वाद्द्विजत्ववत्प्रागुक्त-

ब्राह्मस्कांदवचनसामर्थ्यान्महानदी-संज्ञा-संस्कारेण यथोपनयनं तथा कुशावर्ते प्रादुर्भावात्तत्र तस्या द्वितीयं जन्म तथा पूर्वोक्तस्कांदपाद्मब्राह्मवचनबलेन देवता-तीर्थ-निवासहेतुत्वश्राद्धस्याऽति-पावन-देशत्वतद्विषयकमुंडनो-पवासश्राद्धविधानत्व-स्नानदानादिविशेषफलदातृत्वाऽसदृशत्वादिगुणैस्तद्भिन्नगोदांतर्गतान्य-तीर्थेभ्यः श्रेष्ठतमत्वं तस्य मूलत्वं च ॥ अतएव तस्यैवाऽवांतरत्वमितिनि० चंद्रिकाकारोक्तिर्विरम्यते ॥ किंच ॥ पंचतीर्थानां नामाऽवशिष्टत्वेन पुरावृत्त-कथन-प्रसंगेन ब्राह्मपुराणे गोदामाहात्म्ये यथा ब्रह्मणा त्र्यंबकतीर्थस्य प्राथम्यं क्रमेण कृत्तिकातीर्थस्य पंचमत्वं कथितं तादृगेव कुशावर्तस्य षष्ठत्वं कथ्यते गो० नि० चंद्रिकाकारैः ॥ वस्तुतस्तु गोदायां महानदी-धर्मित्वेन मूलं कुशावर्तं प्रथमतीर्थं न षष्ठमिति पक्षत्रयेणापि सिद्धांतः ॥ तथापि नामशेषतीर्थपंचकस्य "कलौ स्थानानि पूजयेदिति"-न्यायेन दर्शनं पुण्यं तथैव शिष्टाचारः ॥

एतावता ब्राह्मस्कांदादिवाक्यैक्येन गो० नि० चंद्रिकाकारशंका सर्वथैवाऽपास्तेति शं ॥

एकादशपृष्ठस्य पूर्वार्धे "तथाच मूलं गोदोत्पत्तिस्थानमेव ॥ अवसानं गोदासागरसंगमः ॥ उभयभिन्नो भागो मध्यपदार्थः ॥ एवं च त्रिष्वपि मुंडनादिकं ॥ न मूलस्थान एव ॥ अथ कदाचिन्मूलमारभ्य सागरपर्यंतं तीर्थस्याऽन्यूनानतिरिक्तार्थभागो मध्यपदार्थः ॥ तत्र मुंडनादिकमिति ॥ तन्न ॥ तादृशस्य भागस्य पुराणादिषु लोकव्यवहारे चाऽप्रसिद्धेरित्युक्तं" ॥ तदयुक्तं ॥ पुराणेषु मध्यपदार्थस्य प्रतिपदा कथनात् ॥ मूलं त्र्यंबकक्षेत्रवर्तिपूर्वप्रतिपादितं कुशावर्त-तीर्थं ॥ अब्जकं मध्यपदार्थः तदन्यूनाऽनतिरिक्तभागे भवतु वा न वा तस्य प्रतिपदोक्तत्वात् ॥ अवसानं गोदासागरसंगमः ॥ यतः स्कांदे "मूलमध्याऽवसानेषु गोदा लभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषतः" ॥ तथा स्कांदे समानाऽधिकरणके वाक्ये पठ्येते ॥ यथा

"मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ त्र्यंबके चाब्जके चैव गोदा सागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ ब्राह्मे गोदा माहात्म्ये ॥ तथैव दक्षिणे तीरे तीर्थान्येकादशैव तु ॥ अब्जकं हृदयं प्रोक्तं गोदावर्या मुनीश्वरैः ॥ इदानीं स्थानसादृश्यं विविच्यते ॥ त्रयाणां वाक्यानां समन्वये कृते क्रमशः मूलं त्र्यंबकं नाम प्राक् प्रतिपादितं त्र्यंबकक्षेत्रवर्ति गोदापुनरुत्पत्तिस्थानभूतं कुशावर्त-तीर्थं ॥ अब्जकं मध्यः ॥ अवसानं गोदासागरसंगमः ॥ एतानि त्रीणि स्थानानि ॥ तेषु त्रिषु गोदाऽलभ्या दुर्लभा वा ॥ उभये अपिपदे समानाऽर्थके ॥ तेष्वेव त्रिषु स्थानेषु मुंडनश्राद्धयोः प्रवृत्तिः ॥ नान्यत्र ॥ वचनसामर्थ्यात् ॥ भवन्मताऽनुरोधेन तु मूलं गोदोत्पत्तिस्थानं ॥ अवसानं गोदासागरसंगमः ॥ उभयभिन्नो भागो मध्यपदार्थो नाम मूलाऽवसानभिन्नो गोदाया द्विहस्तपरिमिताऽसंख्याततीर्थव्याप्तप्रदेशः ॥ तेन पदार्थत्रयसंकलनेन सर्वत्र गोदाया अलभ्यत्वे दुर्लभत्वे

वा प्राप्ते ॥ अतएव सर्वत्र मुंडनश्राद्धे प्राप्ते ॥ त्रिष्वितिपदस्य तथाऽलभ्यत्वस्य कोर्थः ? किं स्वारस्यं ? किंच महर्षीणामभिप्रायवैयर्थ्य-मेवोत्तिष्ठते ॥ तथाऽऽद्यवचने यदलभ्यमितिपदं तेन सर्वस्यां गोदायामलभ्यत्वे प्राप्ते तत्सापेक्षि यत्सौलभ्यं तस्य गोदायां कुत्र सावकाशत्वं ? तथा सर्वत्र सुलभेत्यस्य पदद्वयस्य कोर्थः ? ॥ अपितु न ॥ गो० नि० चंद्रिकासंमतमध्यपदार्थत्वलक्षणे अति-व्याप्तिदोष एवोपजायते ॥ अतएव गो०नि०चंद्रिकाकारसंमत-मध्य-पदार्थत्वं दोषबाहुल्यात्तुच्छं ॥ तेन त्रिषु स्थानेषु मुंडनश्राद्धे स्तस्तथापि प्राक्सिद्धांति-तत्वेन मूले नाम श्रीकुशावर्ततीर्थ एव ॥ आप्तवाक्यं प्रमाणमितिन्यायेन स्कांदब्राह्मपुराणयोरब्जकस्य मध्यपदार्थधर्मित्वोक्तत्वात् ॥ अब्जकं मध्यपदार्थः ॥ नोभयभिन्नो भागो मध्यपदार्थ इति सिध्यति ॥ गोदासागरसंगमे च ॥

तत्रैव "तथाच पूर्वोक्त एव मध्यपदार्थः ॥ अतएव आदिरंत्येन सहेतेति-

पाणिनिसूत्रस्थ "संबंधिशब्दैर्वा सिद्धमिति ॥ भाष्ये ॥ आद्यंतौ च मध्यापेक्षाविति मध्यमानामेव ॥ संज्ञित्वमिति कैयटे च मध्यपदेनाऽजादिप्रत्याहारे आद्यंतभिन्नानामिकारादिऔकारांतानां वर्णानां ग्रहणं संगतं भवति" ॥ इत्युक्तं ॥ अस्मिन्विषये तदप्रयुक्तं ॥ अत्र तु मध्यपदार्थस्य प्रतिपदोक्तत्वेन पाणिनिसूत्रपठितप्रत्याहारशास्त्रस्य तथा तत्संज्ञाशास्त्रस्य प्रयोजनाऽभावात् ॥ प्रत्याहारो नाम संक्षेपः ॥ आद्यंतवर्णद्वयोच्चारणेनैव मध्यस्थाऽनुक्तानेकवर्णानां सावकाशतया संग्राहकः ॥ स संज्ञाविषयार्हः ॥ आदिरंत्येन सहेतेति सूत्रं संज्ञा-विधायकं परंच यथा स्थलीशब्दस्य नदीसंज्ञा व्याकरणे प्रवर्तते ॥ तथाधर्मशास्त्रे व्यवहारे च न स्यात् ॥ आदिरंत्येन सहेतेति पाणिनिसूत्रं तस्य भट्टोजीदीक्षितव्याख्याकारेण "अंत्येनेता सहित आदिर्मध्यगानां स्वस्यच संज्ञः स्यादिति" स्वकीयकौमुदीसंज्ञकग्रंथे विवरणं क्रियते ॥ भाष्ये तु आदिरंत्येन सहेतेति पाणिनिसूत्रस्थसंबंधिशब्दैर्वा सिद्धमित्युक्तं नामसूत्रे

ये संबंधिन आद्यंतवाचकशब्दास्त एव तत्सापेक्षिमध्यगानां प्रत्याहारस्थानां वर्णानां संज्ञां कुर्वंति तथा आदेरित्यभिप्रायः ॥ संबंधिशब्दैर्वातुल्यमिति भाष्ये चोक्तत्वात् तेनोभयोर्व्याख्याभाष्ययोरैक्यं परं च कैयटे त्वाद्यंतोच्चारणेनैव प्रत्याहारविषये मध्यगानां सापेक्ष्यादनुक्तमध्यगवर्णानामेव संज्ञित्वं नादेरित्येव-काराङ्गन्यते तथापि "स्वं रूपं शब्दस्याऽशब्दसंज्ञे"ति पूर्वशास्त्रस्याऽनुवृत्त्या-ऽदेरपि गृह्यते नादिरंत्येन सहेतेति सूत्रसामर्थ्यादादेः संज्ञित्वं ॥ तत्वबो-धिनीशेखरावपि तथैव "तत्वबोधिनी" मध्यमानामिति "आद्यंताभ्यामव-यवाभ्यामवयवी समुदाय आक्षिप्यते ॥ तस्य युगपल्लक्ष्ये प्रयोगाऽभावात्तदव-यवेष्वेव तरंती संज्ञा मध्येषु विश्राम्यति नत्वाद्यंतयोः ॥ संज्ञास्वरूपांतर्भावेन तयोः पारार्थ्ये निर्णयादित्याशयेनाह ॥ शेखरस्तु "आदिरंत्यवर्णेन सह मध्य-वर्णसंज्ञः स्यात् स्वस्य चेत्यर्थेन अस्तुनाम ॥ केनापि प्रकारेण व्याकरणशास्त्रे-ऽजादिप्रत्याहारे आद्यंतभिन्ना य इकारादि औकारांता वर्णास्तेषां यथा ग्रहणं

भवति तथाऽस्मिन्विषयोप्याद्याऽवसानवाच्यत्र्यंबकक्षेत्रवर्तिकुशावर्तगोदासाग-
रसंगमभिन्नानां गोदांतर्गताऽनुक्ताऽनेकतीर्थानां मध्यपदेन ग्रहणं संगच्छत
इत्याशयो गोदानिर्णयचंद्रिकाकृतां ॥ परंच सोऽग्राह्यः ॥ अव्याप्तिदूषणस-
त्वात् ॥ यथा लक्ष्यैकदेशावृत्तित्वमव्याप्तिः ॥ अव्याप्त्यतिव्याप्त्यसंभवदूषण
रहिता लक्षणा ॥ अस्मिन्विषय आदिरंत्येन सहेतेति व्याकरण-पठित-संज्ञा-
विधायक-शास्त्रस्य सत्यंगीकारेऽपि मूलं त्र्यंबकं नाम त्र्यंबकक्षेत्रवर्तिकुशावर्त-
तीर्थं ॥ अवसानं गोदासागरसंगमः ॥ पुराणवचनेन त्वब्जकं मध्यः यथा-
स्कांदे "त्र्यंबके चाब्जके चैव गोदासागरसंगम इति" तथा ब्राह्मे "अब्जकं हृदयं
प्रोक्तं गोदावर्या मुनीश्वरैरिति" वचनैराद्यंतभिन्नानां मध्यवर्त्यब्जकतीर्थसहितानां
गोदांतर्गतानुक्तानेकतीर्थानां मध्यपदार्थलक्षणया लक्ष्यं तु मूलाऽवसानभि-
न्नानि गोदांतर्गतमध्यवर्तीनि सर्वतीर्थानि संति ॥ परं च तेषां मध्य उपरित-
नवचनबलात्प्रतिपदोक्तपठितं यदेकदेशव्याप्तिमदब्जकतीर्थं तस्मिन्नेव मध्यप-

दार्थधर्मोऽवतरति ॥ नान्येष्ववशिष्टगोदांतर्गतभवत्संमतमध्यवर्तितीर्थेषु ॥ तेन भवल्लक्षणेऽव्याप्तिदूषणमेवोपपद्यते ॥ अतएव पूर्वोक्तमध्यपदार्थो न स्यादिति सिद्धांतः ॥

तत्रैव "किंच मुहूर्तचिंतामणिटीकायां पीयूषधारायामपि 'पक्षस्य मध्ये द्वितिथी पतेतां तदा भवेद्रौरवकालयोगः ॥ पक्षे विनष्टे सकलं विनष्टमित्याहुराचार्यवराः समस्ता' इति वचनव्याख्याऽवसरे मध्यपदोच्चारणाद्वितीयादिचतुर्दश्यंततिथिद्वयह्रासे त्रयोदशदिनात्मकः पक्षोऽतिदोषावहो भवतीति मध्यपदेनाऽद्यंतभिन्नसर्वतीर्थानां ग्रहणं च संगच्छते" इत्युक्तं ॥ तन्न ॥ अस्मिन्विषये तदप्रवृत्तेः ॥ यथा पक्षस्य मध्य इत्युच्चारणेनैव पक्ष आद्यंतभिन्नतिथय इति ग्रहणं भवति तेनैव सर्वासामनुक्तत्रयोदशतिथीनां ग्रहणं संगच्छते तथाच तासां मध्येपि ह्रासार्हतिथिद्वयस्यानुक्तत्वात् त्रयोदशतिथीनां सावकाशतया सापेक्ष्यमत एव मध्यपदेन सर्वासामाद्यंतभिन्नत्रयोदशतिथीनां ग्रहणं संगतं

भवति ॥ परं चास्मिन् विषये तु क्रमशो मूलमध्यावसानभूतानां त्र्यंबकाब्ज-
कगोदासागरसंगमतीर्थानां प्रतिपदा पठणान्मध्यदार्थस्य सापेक्ष्यं नास्त्येव नाम
मूलाऽवसानभिन्नानां गोदामध्यवर्त्यब्जकरहिताऽनुक्ताऽनेकतीर्थानां विवक्षारा-
हित्यात् तेषां ग्रहणं न संगच्छते ॥ अतएव भवन्मताभिप्रेतमध्यपदार्थो न सि-
ध्यति न युक्त इत्यर्थः ॥ तत्रैवोत्तरार्धे "केचित्तु मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ
युगे ॥ मुंडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषतः" ॥ इत्यत्र महापुण्यानि गोदायां क-
थयामि यथाक्रमं ॥ कुशावर्त पद्मनगरमरुणावरुणयोरधः ॥ प्रतिष्ठानमब्दकं तु
गोदासागरसंगम इत्यत्र च दुर्लभत्वमहापुण्यदातृत्वयोर्यथाक्रममुक्तत्वेनैकार्थक-
त्वस्यैव पर्यवसानादुभयोरेकवाक्यता ॥ तथाच कुशावर्तपद्मनगरप्रतिष्ठाना-
ऽब्दकगोदासागरसंगमाधिकरणकं तीर्थपंचकं गो० नि० चं० कार मध्यपदार्थ
इत्युक्तं" ॥ तदसत् ॥ यतः भवन्मतानुरोधेन यद्यपि दुर्लभत्वमहापुण्यदातृत्व-
योर्यथाक्रममुक्तत्वेनैकार्थकत्वस्यैव पर्यवसानादुभयोरेकवाक्यता गृहीता त-

थापि स्कांदे 'मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा॥ त्र्यंबके चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥' एतयोः समानाधिकरणकयोर्वचनयोस्तथोपरितनप्रथमवचनस्य क्रमशोऽन्वयात् मुंडनश्राद्धे त्र्यंबकाब्जकगोदासागरसंगमैः सहैव संबध्येते ॥ नतु पद्मनगरप्रतिष्ठानाब्दकतीर्थैः सह ॥ त्र्यंबकं नाम पूर्वप्रतिपादितं त्र्यंबकक्षेत्रे मूलवर्तिकुशावर्ततीर्थं ॥ गोदासागरसंगमः स्पष्टः ॥ स्कंदानां पद्मनगरादित्रयस्य विवक्षासत्वाऽदर्शनात् ॥ अन्यथा त्रिषु स्थानेषु दुर्लभेति पदं सर्वत्र सुलभेति पदं वोपरितनवचनयोस्तेनापठिष्यन् ॥ अतएव भवन्मते गृहीते स्कंदानां वचनयोरर्थगौरवं स्वारस्यं च न शिष्यति ॥

अब्जकस्थानेऽब्दकमिति मिथ्यापाठांतरं कृतमिति मे प्रतिभाति ॥ तथा कुशावर्तं पद्मनगरमिति वाक्यवशात् तथा पूर्वोदाहृतप्रथमवचनेन सहभवत्संमतस्य तीर्थपंचकस्य मध्यपदार्थत्वेन ग्रहणं कृतं चेत्तस्याऽऽद्यावसानाभ्यां

सह संकलनेन सप्तस्थानान्यथवाऽवसानपदवाच्यगोदासागरसंगमस्य मध्याऽवसानयोरेकत्वेन ग्रहणे कृते षट्स्थानानि भवंति तेनापि वाक्यस्थस्य त्रिष्विति पदस्य सर्वत्र सुलभेति पदस्य चानर्थक्यमस्वारस्यं च प्रवर्तते ॥ तत्तुच्छं ॥ त्रिषु स्थानेषु दुर्लभेति पदैर्बाधात् ॥

तत्रापि "मूलमध्याऽवसानेष्विति वाक्ये मध्यपदेनैवाऽवसानपदवाच्यगोदासागरसंगमस्य ग्रहणे सिद्धे पृथगवसानग्रहणं गोबलीवर्दन्यायेनेत्युक्तं" तत्तुच्छं॥ एकपदेनैव मध्याऽवसानस्थानयोर्ग्रहणविषये किंचिदुच्यते लघुशब्देंदुशेखरे "अयमादिरंतो वेत्युक्तेऽवशिष्टं किंचिदस्तीति" नियमेन प्रतीतिरित्युक्तत्वादवसानपदवाच्यगोदासागरसंगमस्य मध्यपदार्थत्वग्रहणेनांऽत्यस्य नाम गोदाऽवसानस्थानस्य सापेक्ष्यं प्रतीयते ॥ तत्तु गोदासागरसंगमं विना न सिध्यति न दर्शितं वा अवसानस्य मध्यपदार्थत्वेन ग्रहणं पूर्वोक्ताधारेणाऽवैय्याकरणविषयं वैय्याकरणास्तु कदापि नांगीकरिष्यंति ॥ अतः तस्य मध्यपदार्थत्वेन

ग्रहणमसंगतमित्येकपक्षः ॥ वस्तुस्थित्या गणितशास्त्रसिद्धांतेन चादिमध्या-वसानानां परस्परसापेक्ष्यान्मध्योनाऽवसानं भवति ॥ नाऽवसानं मध्यपदार्थो वा यथा व्यवहारे मूलमध्याऽवसानभूतचंचुहृदयपुच्छघटितपक्षिदेहे हृदयस्य पुच्छसंज्ञा न स्यात् ॥ न पुच्छस्य हृदयसंज्ञा वा ॥ गणितशास्त्रेपि बिंदुत्रयात्मिकायां रेखायां मध्ये मूलमध्याऽवसानस्थानभूतबिंदुत्रयात् कोपि बिंदुः स्वाधिष्ठानस्थितः सन् पराधिष्ठानस्थितः कदापि न भवति तादृशग्रहणे कृतेऽव्यवहारित्वमेव संपद्येतेति द्वितीयः पक्षः पृथगवासानग्रहणं गोबलीवर्दन्यायेनेत्युक्तं तदपि तुच्छं तस्य न्यायस्याऽप्रवृत्तेः ॥ यथा गोसमूहे काश्चिद्गावः केचिद्बलीवर्दा अपि संति तदा गामानयेत्युक्त्या बलीवर्दाऽऽनयनमपि संगतं भवति ॥ एकजातित्वात् पर्यायवाचित्वाच्च यथाऽमरकोशे "लक्ष्यदृष्ट्या स्त्रियां पुंसि गौर्लिंगं चिह्नशेफसोरिति" तथा मध्यो मध्याऽवसानयोरिति नवीनकोशकल्पनं विना तन्न्यायस्याऽसंभवः ॥ तेन पुनरवसानग्रहणं

न संगच्छते ॥ मूलमध्याऽवसानेष्विति मुंडनविधायकवचनबलात्तथा त्र्यंबके चाब्जके चैवेति वचनबलेन च कुशावर्ताऽब्जकगोदासागरसंगमानामेव दुर्लभत्वाद्भवत्संमतस्य तीर्थपंचकस्य मध्यपदार्थत्वलक्षणसिद्धिविषयेऽव्याप्त्यसंभवदूषणद्वयदर्शनान्न तीर्थपंचकं मध्यपदार्थः महापुण्यानि गंगायामिति सार्द्धवाक्यस्य मुंडनविधायकासत्वात्पूर्वापरसंदर्भाऽसंगत्या च मुंडनविधायकमूलमध्याऽवसानेष्विति वाक्येन सह संगतिसंभवोपि चिंत्य एव ॥

तत्राप्येकादशपृष्ठे "त्र्यंबके चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा त्र्यंबकं मूलस्थानं ॥ अब्जकं तु मात्स्ये-कृते तु पद्मनगरं त्रेतायां तु त्रिकंटकं ॥ द्वापरे तु जनस्थानं कलौ नाशिकमुच्यत' इति वचनान्नासिकक्षेत्रं ॥ गोदासागरसंगमः प्रसिद्धः ॥ यत्त्वब्जकशब्दसादृश्यान्नाभिपरत्वेन तत्स्थानापन्न-नांदेड-प्रतिष्ठानान्यतरक्षेत्रमर्थ इति ॥ तन्न ॥ लक्षणामंतरोपपत्तौ लक्षणया व्याख्यानस्याऽयुक्तत्वात् ॥ नांदेडप्रतिष्ठानान्यतरत्रेक्षस्य ना-

भिस्थानापन्नत्वे विनिगमकाभावाच्च तथा-चाब्जकशब्दस्य पूर्वोक्त एवार्थः ॥
एवं च पूर्वोक्तार्थकवाक्ये मध्यमस्याऽब्जकस्यैकस्यैव ग्रहणेपि तस्य मात्स्यत्वेन
न विरोधः ॥ अथवाऽब्जकग्रहणमितरेषामुपलक्षणमिति वदंति ॥ परमेतस्य
वाख्यानस्याऽति-क्लिष्टत्वेनाऽयुक्तत्वात् ॥ युक्तत्वेपि नास्मात् त्र्यंबक एव मुंडन-
मित्यर्थः सिद्ध्यतीत्यलमित्युक्तं" ॥ तन्न ॥ पद्मनगरादब्जकतीर्थस्य स्थानत्वेन
पृथक्त्वात्तथा त्र्यंबकक्षेत्रवर्तिकुशावर्तएव मुंडनोपवासश्राद्धानां प्राक्-प्रति-
पादनद्वारा सिद्धेश्च ॥ यतः कुशावर्तं पद्मनगरमरुणावरुणयोरध इति वाक्येन
सह मात्स्यस्थस्य-"कृते तु पद्मनगर"मित्यस्य समन्वयेन नासिकवाच्यपद्म-
नगरं यत्र गोदावर्या सहारुणावरुणयोः संगमोऽस्ति तस्याऽधोभागे वर्तते ॥
अब्जकं त्वनेकयोजनांतरे गोदाफेनानद्योः संगमे दक्षिणतीरे गोदाहृदयभूत-
त्वेनैकादशतीर्थेषु प्रमुख-तयास्ति ॥ यथा ब्राह्मे गोदामाहात्म्ये 'फेनायाः संगमो
यत्र हनूमंतं तथैव च ॥ अब्जकं चापि यत् प्रोक्तं यत्र देवस्त्रिविक्रमः ॥ तत्र स्नानं

च दानं च पुनरावृत्तिदुर्लभं ॥ वार्षाकपंचाब्जकं च तत्रेदं वर्तनं शृणु ॥ हिरण्य इति विख्यातो दैत्यानां पूर्वजो बली ॥ इति हिरण्यदैत्यस्य महाशनेः कथानकप्रसंगेन ब्रह्मण उक्तिः ॥ तथा इंद्रेश्वरे चाब्जके च उभयस्तीरयोः सुराः ॥ एकत्र शंकरो देवो ह्यपरत्र जनार्दनः ॥ तथैव दक्षिणे तीरे तीर्थान्येकादशैव तु ॥ अब्जकं हृदयं प्रोक्तं गोदावर्या मुनीश्वरैः ॥ विश्रामस्थानमीशस्य विष्णोर्ब्रह्मण एव च' ॥ तथा स्कांदे सह्याद्रिखंडे गंगावचनं 'त्रिविक्रमेण मे ज्ञातमब्जकं रूपमद्भुतं। त्र्यंबके ब्रह्मणा पूर्वं तथा रुद्रेण धीमता' ॥ तथा च त्रिस्थलीसेतौ सामान्यप्रघट्टके महानदीनां दर्शनसंबंधेन योजनप्रमाणेन कृच्छ्रपरिमाणतः पुण्यकथनप्रसंगे 'त्रिंशद्योजनागतस्यैकादश-तीर्थेषु प्रतिलोमानुलोमस्नानं षष्टिकृच्छ्र-सममिति' तेन पद्मनगरं नाऽब्जकं तत्तस्मात्पृथगेव तथा नांदेडप्रतिष्ठानान्यतरमपि नाब्जकं ॥ गोदायामब्जकतीर्थं तु स्वनाम्ना प्रसिद्धत्वात्तस्यान्यतीर्थस्य लक्षणा-या अप्रयोजनं ॥ अतएव शास्त्रविवक्षया पद्मनगरवाच्यनासिकं नाब्जकं न मध्यपदार्थः ॥

'मूलमध्याऽवसानेषु गोदाऽलभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यात्तीर्थश्राद्धं विशेषतः' ॥ इति वचनेन सह त्र्यंबके चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितांवरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभापि हि ॥ कुशावर्ते तु ये राजन्निति ॥ प्रमादाद्यो नरो मूलमित्यादीनां पूर्वोदाहृतवचनानां समन्वयेन दौर्लभ्यादिसमानहेत्वर्थेन त्र्यंबकक्षेत्रवर्ति-कुशावर्त एव मुंडनोपवासश्राद्धानां गोदाप्रयुक्तानां सावकाशत्वं नान्यत्र गोदायामिति नियमविधिः प्रवर्तते ॥ दुर्लभतमत्वाद्यप्राप्तांशपूरणात् ॥ तेन 'स्मृतमात्रस्तदा तत्र आविरासीत् कृपानिधि'रिति वाक्यवशात्केवलं शंकरसामी-प्यसाम्येन गोदांतर्गतानेकतीर्थ-प्रयुक्त-मुंडनादेर्विहितत्वमापाततो निरस्तं ॥ तेषामप्रतिपदोक्तत्वात् ॥ अस्तु नाम ॥ वयं तु गोदानिर्णयचंद्रिकाकारकु-तर्कसंकुलितमध्यपदार्थसिद्धिविषयकक्लिष्टपिष्टपेषणवद्व्याख्यानखंडनेन श्रांताः ॥ अलमतिविस्तरेण ॥

द्वादशपृष्ठस्य पूर्वार्धे "तथा च पूर्वोक्तस्यैव मध्यपदार्थस्य युक्तत्वं ॥ एवं च मूलमारभ्य सागरपर्यंतं गोदायामुंडन-स्नानादिकं यत्र कुत्राप्यलभ्यं कलि-युगस्थ-प्राणिनां सुकृताभावादिति पूर्ववाक्यस्य पूर्वार्धार्थः ॥ यत्र दैववशेन गोदाप्राप्तिस्तत्र मुंडनादिकमावश्यकमित्युत्तरार्धार्थः" ॥ इत्युक्तं ॥ तदसिद्धं ॥ मूलमध्याऽवसानेष्विति त्रिष्वेव स्थानेषु पूर्वार्धे कलियुगे गोदादुर्लभत्वदर्शनात् ॥ तथा गोदानिर्णयचंद्रिकाकृत्संमतानामनेकविधपूर्वोक्तमध्यपदार्थानां प्राक् खंडनद्वारा निराकृतत्वात् ॥ यतोऽनेकरूपेणाऽनेकतीर्थानां मध्यपदार्थ-त्वसिद्धिविषयेऽत्यंतक्लिष्टत्वेनापि भवद्भिः प्राक् व्यर्थं प्रयत्यते ॥ तथाऽप्यब्ज-क-तीर्थं विना कस्यापि तीर्थस्य मध्यपदार्थत्वेन सिद्धिर्ना जायत् ॥ दुर्बुद्ध्य-सूयाविषयात् ॥ अस्तु यावत् ॥ अत्राप्यनेकपूर्वोक्तानां भवत्संमतानां कस्य मध्यपदार्थस्य युक्तत्वं? ॥ अपि तु नेति सूत्तरं ॥ गोदायात्राविषये तु मुंडना-दिकं त्र्यंबकमहाक्षेत्रे शास्त्रप्रतिपादि ते कुशावर्त एवेति पूर्वमेव सिद्धांतितं

स्यात् ॥ कलियुगवशेन प्राणिनां सुकृताभावाच्छास्त्रं विहाय यत्र कुत्रापि गोदायां विशेषकारणंविना यात्राकार्येत्युत्तरार्धार्थो न स्यात् ॥ इयमुक्तिस्तु प्राच्यानां लोकोक्तिवद्भाति ॥ यथा तेषां प्राकृतभाषायां "मनमे चंगा तो काथवटमे गंगा" परं च भवत्सदृशानां विदुषां त्वेतदसदृशं गर्हणीयं च ॥ तेन भवत्संमतस्य कस्यापि मध्यपदार्थस्याऽसिध्याऽर्थादपि च पूर्ववाक्यस्य पूर्वार्धस्य गोदायां यत्रकुत्रापि मुंडनादिकमलभ्यमिति किमपि न सिध्यति॥ दैववशेन यत्र कुत्रापि गोदाप्राप्तिस्तत्रैव मुंडनादिकमावश्यकमित्यपि द्रव्यशरीरदौर्बल्यादिप्रागुक्तकारणैर्विना न प्रवर्तते ॥ तत्तु प्राग्दत्तसिद्धांतेन श्रीमत्कुशावर्त एव नान्यत्र गोदायां ॥

तत्रापि पृष्ठे "इदं मूलमध्यावसानेष्विति वाक्यं प्रमादाद्यो नरो मूलं हित्वाऽन्यत्र विशेषभागिति वाक्याऽर्थेन सह विरुद्धकार्थकमिति स्कांदयोरेव विरोध इति ऋषेरज्ञानित्वमुत्तरवाक्यस्याऽधुनिककल्पितत्वोक्तिमंतरा न निव-

र्तते ॥ पूर्ववाक्येनाऽऽदिमध्याऽवसानेषु मुंडनश्राद्धयोः कर्तव्यत्वोक्तिः ॥
उत्तरवाक्येन तु मूलस्थानाऽतिरिक्ते मुंडनादिकरणे नरकप्राप्तिरुक्तेति विरोधः।
स्पष्टएव तथाचोत्तरवचनस्याऽप्रामाण्यमेव" ॥ इत्युक्तं ॥ तत्तु निष्फल-पांडित्यं ॥
ऋषीणां निरंकुशत्वात्तीर्थानां न्यूनाधिकफलतारतम्येन विशेषविधिविधानाच्च ।
यथा ब्राह्मे "गोदावरी भीमरथी तुंगभद्रा च वेणिका ॥ तापी पयोष्णी विंध्यस्य दक्षिणे
तु प्रकीर्तिताः ॥ भागीरथी नर्मदा च यमुना च सरस्वती ॥ विशोका च वितस्ता च
हिमवत्पर्वताश्रिता" इति त्रिस्थलीसेत्वादिधृतब्रह्मपुराणपरिगणितमहानदीनां
तुल्यत्वं तथा गौतमी-भागीरथ्योरेकप्रकृतिकत्वं तदुक्तं ब्राह्मे ब्रह्मनारदसंवादे
"महेश्वरजटास्थाया आपो देव्यो महामते ॥ तासां च द्विविधो भेद आहर्तुः पदका-
रणात् ॥ एकोंशो ब्राह्मणेनात्र व्रतदानसमाधिना ॥ भगीरथेन भूपेन आहृतोंशो परस्तथा ॥
तथा च ब्रह्मपुराण एवाऽन्यत्र "पंचानामपि भूतानामापः श्रेष्ठतमा मताः ॥ तत्रापि
तीर्थभूतास्तु तस्मादापः परा स्मृताः ॥ तासां भागीरथी श्रेष्ठा तस्या या गौतमी त्वया ॥

आनीता सा तदा गंगा अस्या नान्यच्छुभावहं" ॥ एतानि ब्रह्मपुराणस्थ-वचनानि भवत्संमतानि ॥ भवद्ग्रंथे तेषां परिग्रहात् ॥ तथा स्कांदे सह्याद्रिखंडे "त्र्यंबके-चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ त्र्यंबकं चाब्जकं चाब्धेः संगमाख्यं च जन्मिनां ॥ दुर्लभाहं सार्वकालं सुलभान्यत्र सर्वतः ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभा पिहीति॥" सागरं प्रति गंगावचनं मनुस्मृतिरपि अ० १ श्लो० १५ 'उदितेऽनुदिते चैव सम-याध्युषिते तथा ॥ सर्वथा वर्तते यज्ञ इतीयं वैदिकी श्रुतिः ॥' यद्याद्य गोदावरी भीम-रथीति ब्राह्मस्थवाक्यद्धयेन गोदावरीभागीरथ्योस्तुल्यत्वमेकेनैव ब्रह्मणोक्तं महे-श्वरजटास्थाया इति तत्रस्थेनैव वचनद्धयेन तु तयोः सारूप्यं दर्शितं ॥ पंचाना-मपि भूतानामिति वाक्यद्धयेन भागीरथ्यपेक्षया गोदायाः श्रेष्ठतरत्वं शुभावहत्वं च वर्णितं ॥ एतेषु वचनेषु केषां वचनानामृषेरज्ञानित्वं केषां वाऽधुनिककल्पित-त्वोक्तिर्मतव्येति ग्रंथकृत एव पृष्ठव्या अपितुन ॥ ऋषयस्तु निरंकुशा एव तथा

स्कंदेनापि त्र्यंबके चाब्जक इति वचनद्वयेन त्र्यंबकादिस्थानत्रयस्य गोदायां प्रथमं दुर्लभत्वं दर्शितं ॥ गोदासागरसंवादप्रसंगेन तेनैव तस्मात् त्र्यंबक एव वेति वचनेनाऽब्जकगंगासागरसंगमाभ्यां त्र्यंबकस्य नाम त्र्यंबकक्षेत्रस्थमूलवर्तिकुशावर्तस्यैव दुर्लभतमत्वं कथितं ॥ तथैव मूलमध्याऽवसानेष्विति वाक्ये मुंडनादिविषये प्रथमं स्थानत्रयमुक्त्वा त्र्यंबकएव गोदाया दुर्लभ-तमत्वाऽदिगुणान्मनसिकृत्वा गोदासागर-संवादाऽभिप्रायेण प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभागिति वचनं पठितं तथा मनुवाक्ये 'उदिते नामोदयात्पूर्वमरुणकिरण–वान्कालस्तस्मिंस्तथाऽनुदिते नामप्रविरलतारकः कालस्तस्मिन् समयाध्युषित-शब्देन सूर्यनक्षत्र-वर्जितकाल उच्यते नाम परस्परविरोध्येकयैव श्रुत्याऽग्नि-होत्रकालश्चोदितः तत्संबंधेन यत्त्वाह व्याख्याकारः कुल्लूकभट्टः "श्रुतिर्वेदः मन्वादिशास्त्रं स्मृतिः तदुभे प्रतिकूल-तर्कैर्न विचारयितव्ये यतस्ताभ्यां निःशेषेण धर्मो बभौ नाम प्रकाशतां गतः इत्युक्तं तन्न्यायेन ब्रह्मस्कंदावुभावपि महर्षी

धर्मप्रतिपादकौ तथा सिद्धस्य गतिश्चिंतनीया एतन्न्यायेन विरुद्धार्थकत्वहेतुना कस्यापि वचनस्य दोषत्रयराहित्ये सति तारतम्यादेवाऽधुनिककल्पनाकरणे-नाऽस्मत्सदृशानामल्पविन्मानवानामधिकारः ॥ तेन ऋषेरज्ञानित्वमपास्तं ॥ तथोपरितनमुंडनविधायकवाक्ययोः काल्पनिकविरोधोऽपि तारतम्येन फ-लदत्वदर्शनाद्ग्राह्य एव ॥ उत्तरवाक्यस्याऽधुनिकत्वमित्युक्तिरपि न ग्राह्या ॥ अतो विरोधस्याऽग्राह्यत्वेन तद्वाक्यस्याऽप्रामाण्यमप्यसिद्धं ॥ उभयोर्वचन-योरेककर्तृत्वदर्शनात् ॥ प्रमादाद्यो नरो मूलमिति वचनस्य बलीयस्त्वं प्राग्प्र-तिपादितसिद्धांतात्तेन कुशावर्त एव मुंडनमिति सिद्धमिति निष्कर्षः ॥

तत्राप्युत्तरार्धे "अथ चानयोर्यदि सत्यत्वं स्कंदपुराणस्थत्वं तर्हीत्थं व्यवस्था यदा मुख्या नासिकत्र्यंबक इत्युभयक्षेत्रक्रमयात्राकर्तुमिच्छा तदा 'आदौ गत्वा जनस्थाने स्नात्वा च विधिपूर्वकं ॥ श्राद्धदानादिकं कुर्यात् ततो दृष्ट्वा जनार्दनं ॥ पंचवट्यां रामचंद्रं ततो गच्छेत्तु त्र्यंबकं ॥ कुशावर्ते नरः स्नात्वा श्राद्धदानादिकाः

क्रियाः ॥ कृत्वा तु त्र्यंबकं पश्येच्छंकरं लोकशंकरं ॥ पुनर्दृष्ट्वा पंचवट्यामेष यात्राक्रमः स्मृत' इति स्कंदपुराणोक्तक्रमयात्रा-पक्षे जनस्थाने मुंडनादिकं तत्रैव गोदायाः प्रथमदर्शनस्य जातत्वादिति पूर्ववाक्यस्य मूलमध्याऽवसानेष्वित्यस्य विषयः ॥ यदा च मध्यमा प्रसिद्ध-क्षेत्राऽधिकरणक-गोदायात्राकर्तव्ये-नेष्टा तदोत्तरवाक्यस्य विषयः ॥ तथाहि क्रमयात्राभिन्नमार्गेण कश्चिद्यात्रिको मूलस्थानं गतः तेनाऽदौ गत्वा जनस्थानमित्यादिवाक्यानां सामान्यगोदायात्रापरत्वं न तु क्रमयात्रा-परत्वमिति भ्रमरूपप्रमादेन मूलस्थानं त्यक्त्वा जनस्थान आगत्य मुंडनं कृतं तस्य रौरवप्राप्तिर्विधीयते तदधिकरणकप्रथम-गोदा-दर्शनस्य जातत्वेनाऽसति प्रतिबंधे दर्शनाऽव्यवहितकाल एव मुंडनादेः कर्तव्यत्वात् ॥ अतएव हित्वेति क्त्वांतस्य स्वरसतोऽर्थबोधजनकतो-पपद्यत इत्यल भूयसा" इत्युक्तं ॥ तदसंगतं ॥ भिन्नभिन्नकालोत्पन्नवर्ण्यविषयाणां युगपत्परस्परसंबंधाऽभावेनाऽसंभवनीयत्वप्रतीतेः ॥ यथा स्कांदे "गते कृते द्विलक्षे

वै मांधातृचक्रवर्तिनि ॥ धाताब्दे कच्छप-जनौ तथा सिंहगते गुरौ ॥ माघशुक्लदशम्यां च मध्याह्ने सौम्यवासरे ॥ गंगासमागता भूमौ गौतम-प्रार्थिता सती ॥ अथवा सिंहस्थमाहात्म्यस्य जीर्णपुस्तके "कृते लक्षद्वयातीते मांधातरि शके सति ॥ कूर्मे चैवाऽवतारे च सिंहस्थे च बृहस्पतौ ॥ ब्रह्माद्रेः शिखराद्गंगा पूर्वसागरमाययौ ॥ अतः सर्वेषु कालेषु सिंहस्थोऽत्र विशिष्यते ॥ शेषं पूर्ववत्" ॥ सुरगुरौ सिंहस्थिते सत्यत्र नाम यत्र क्षेत्रे गोदोत्पत्तिर्जाता तत्र त्र्यंबकक्षेत्र एव विशेषेण सिंहस्थपर्वमाहात्म्यमिति विशेषो ध्वन्यते ॥ बह्वंशैरुभयोर्वचनयोरेकवाक्यता ॥ अस्तु यावत् ॥ अनयोः सारांशः सति कृतयुगे लक्षद्वयातीते कूर्माऽवतारे च किंचित् कालावधिना त्र्यंबकक्षेत्रे कुशावर्ततीर्थे गोदा प्रादुर्बभूव ॥ तथा च ब्राह्मे ॥ "मुने कुशं समादाय इत आह्वानय-स्व भो ॥ तथा चक्रे सहि मुनिस्ततः प्रादुर्बभूव सा ॥ कुशावर्तं ततस्तीर्थं देवानामपि दुर्लभं ॥ तथैव स्कांदे "मुने तनु कुशाग्रेण भूमौ द्रक्ष्यसि गौतमीं ॥ कुशेनाऽवर्तिता मंत्रैश्चिद्रसा मुनिना यतः । कुशावर्तमिति ख्यातं

तीर्थं तत्राऽतिपावनं" ॥ एतैरपि वचनैः कुशावर्ते कृतयुगे कूर्माऽवतारे सति गोदायाः प्रादुर्भावो जातः ॥ दाशरथे रामचंद्रस्याऽवतारस्तु त्रेतायां जातः ॥ यथा अध्यात्मरामायणे कबंधराक्षस-वध-प्रसंगे "त्रेतायुगे दाशरथिर्भूत्वा नारायणः स्वयं ॥ आगमिष्यति ते बाहू छिद्येते योजनाऽऽयताविति" ॥ तथा रामचंद्राऽवतारस्तु कूर्माऽवतारात् पंचमः कालांतरेण जातः ॥ तथाच नासिकक्षेत्रमपि द्वापर-युगे जनस्थानसंज्ञां प्राप ॥ यथा मात्स्ये– "कृते तु पद्मनगरं त्रेतायां तु त्रिकंटकं ॥ द्वापरे तु जनस्थानं कलौ नासिक-मुच्यते" ॥ अनेन प्रकारेण वर्ण्य-पदार्थत्रयस्थभिन्नभिन्नयुगोत्पन्नत्वेन गोदा-प्रादुर्भावा-नंतरं बहु-काल-वशेन दाशरथे रामचंद्रस्याऽस्मिन्पृथ्वीतले दर्शन-सत्वं तत्पश्चादपि युगांतरेण नासि-कस्य जनस्थानसंज्ञा बभूव तद्धुपरितनादौ गत्वा जनस्थान इति वाक्यत्रय-स्थ-युगांतरोत्पन्न-वर्ण्ययो रामचंद्रजनस्थानयोः कालैक्येन युगपत्पूर्व-युगोत्प-न्नगोदया सह मुख्ययात्राक्रमविषयकाऽऽवश्यकत्वसंबंध-कथनं कथं संभवति

॥ १ ॥ एतत्तु पितृजातकर्मणस्तत्पुत्रकर्तृत्वकाऽवश्यक-त्ववद्दृश्यते ॥ ननु रामचंद्राऽवतारावधिजनस्थानसंज्ञाप्राप्तिकालपर्यंतं वा गोदायात्राया अ-सत्वं ? ॥ आदौ गत्वेति वचनसामर्थ्येन प्राप्तमुख्ययात्रासंभवो वा तर्क-नीयः ? ॥ नाद्यः ॥ सह्याद्रिखंडे गोदामाहात्म्ये श्वेतभूपतिना विष्णुदत्तवैश्येन च कृतयुग एव कुशावर्ते गोदायात्रा कृतेति पुरावृत्तकथानकात् ॥ नांत्य एव ॥ वर्ण्यपदार्थानां युग-पौर्वा-पर्येणोत्पन्नत्वेन व्यतिरेकाद्-संभवाच्च ॥ य-द्यादौ गत्वेति पद्यत्रयस्याऽवसाने 'पुनर्दृष्टा पंचवट्यामेष यात्राक्रमः कलावित्या-धुनिक-कल्पकेन ग्रंथितं चेद्भवत्संमतस्य यात्रातारतम्यस्य साफल्यमभविष्यत् ॥ तत्तु स एव नाशयति स्म ॥ सत्यं जयते ॥ तस्याऽयं दोषः ॥ संसर्गेण भव-तामपि ॥ तथेदं स्कांद-वचन-मिति स्कंदनाम-ग्रहणं तु केवलमाधुनिकतयाऽ-पिधानकं ॥ स्कंदास्त्वेतादृशमसंभवनीय-वर्णनं कदापि कुत्रापि च न कुर्वंति स्म ॥ न च पूर्वापरविरोधाऽऽभासकं प्रमादाद्यो नरो मूलमिति तथा—मूल-

मध्याऽवसानेषु गोदा लभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यादिति वाक्यद्वय-
मिवोपरितनादौ गत्वेति वचनत्रयस्यापि स्कांदस्थत्वेन ग्रहणं कर्तव्यमिति
वाच्यं तयोभरुयोः पूर्ववाक्ययोः कालैक्येन विद्यमानवस्तूनां तारतम्यरूपस्तु-
त्यर्थेन विरोधाऽभावात् ॥ तथा वाक्यत्रये तु युगपद्भाविवर्ण्य-योर्विद्यमानेन
सह संबंधदर्शनेनाऽसंभवदोषापत्तेः ॥ स्तुत्यर्थेन तु धर्मे प्रामाण्यं यथा मनु-
स्मृति-टीकायां यदाह जैमिनिः विधिना त्वेक-वाक्यत्वात् स्तुत्यर्थेन विधीनां
स्युः तेन मुंडनविधायकवाक्ययोर्न विरोधः॥ नासिकत्र्यंबकैक-रूपाधिकरणक-
यात्राप्यसंभवनीया ॥ तयोरुभयोः क्षेत्रयोः पृथक्त्वसत्वात् ॥ यथा "काशी
पुरी च केदारो महाकालोथ नासिकं ॥ त्र्यंबकाख्यं महाक्षेत्रं पंचदीपा इमे भुवि"
॥ किंच ॥ सिंहस्थमाहात्म्ये प्रथमं कुशावर्तमहिमानं कथयित्वा तदनंतरं क्र-
मेणाऽहल्यासंगमगोवर्धनतीर्थयात्राफलं वर्णयित्वा नासिकक्षेत्रस्थाऽरुणवरुणा-
गोदासंगमतीर्थस्य माहात्म्यं कथितं ॥ आहोस्विद्यात्रा-क्रम-मुख्यत्वाऽमुख्यत्वे

यात्रिकस्येच्छामात्रे शास्त्रप्रमाण-विहितेवेति शास्त्रदृष्ट्या भवद्भिरेव विचारणीये ॥ एतावतोपरि-तनादौ गत्वेति वाक्यत्रयमसंभवनीयत्वादत एवाऽधुनिकत्वात् त्याज्यं ॥ तत्तु यत्र यत्र नूतनांकिते ग्रंथे दृष्टं स्यात् तत्र तत्र तद्धरितालपिहितं भवत्विति विदुषां बुद्धिर्निसर्गत एव भवेत् ॥ तत्रैव "हित्वेति क्त्वां-तस्य स्वरसतोर्थजनकतोपपद्यत" इत्युक्ति-स्तु केवलं वैय्याकरणानां वंचनापाटवं ॥ यतः प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं नरकं चाधिगच्छतीति ऋषिवाक्यं यथा ब्राह्मेपि "विहाय गौतमीं गंगां तीर्थान्यन्यानि सेवते ॥ ये यांति मूढास्ते यांति नरकं सिंहगे गुरा" वितिवत् ॥ प्रमादाद्यो नरो मूलमितिवाक्ये मूलं नाम गोदाया मूलं तदवच्छिन्नं कुशावर्त-तीर्थं, हित्वा नाम सेवितुमनागत्य अन्यत्र विशेषभाक् सन्नाम गोदाभिन्नतीर्थवन्मूलस्वरसतो मूलभिन्नगोदां-तर्गतान्य-तीर्थानि मुंडनश्राद्धविषये विहितानीति मत्वा तत्र मुंडनादिकं करोति स नरकं यातीति स्कंदानाम-

भिप्रायः यथा सिंहगते गुरौ गौतमीं विहायाऽन्यतीर्थ-सेवने नरकप्राप्तिरिति ब्राह्मवचनं ॥ भवतामभिप्रायस्तु यदि यात्रिको मूलमागत्य तस्याऽनादरं कृत्वा मुंडनादिक-मन्यत्र गोदांतर्गततीर्थे करोति स नरकं यास्यति भवदभि-प्रायस्तु स्कंदाऽभिप्रायेण सह विरोधित्वात्तुच्छः ॥ तथा हित्वेत्यत्र हाधातोः सकाशात् क्त्वाप्रत्ययः हाधातुस्तु केवलं त्यागार्थकः ॥ नतु कस्मिंश्चि-त्स्थले प्राप्य त्याग इत्यर्थकः ॥ क्त्वाप्रत्ययेन धात्वर्थस्य परक्रियान्वयित्वमेव सूचितं ॥ नतुधात्वर्थांतर-कारकस्क्त्वा-प्रत्ययः उपसर्गेण धात्वर्थो बलीया-निति न्यायेन यथोपसर्गेणार्थांतरं भवति न तथा प्रत्ययेन ॥ तेन भवत्संमत-वदत्र क्वापि स्वरसतोऽर्थ-जनकता नोपपद्यते ॥

त्रयोदशपृष्ठे "यत्तु तैरेव स्वग्रंथ उक्तं जनस्थानकृतमुंडनेन श्रीत्र्यंबक-दर्शनार्थं मूलस्थानमागतेन कुशावर्ते मुंडनं कार्यं ॥ तत्र किंचिद्विचार्यते ॥ तन्मुंडनं गोदातीर्थप्रयुक्तमाहोस्वित्कुशावर्त-प्रयुक्तं ॥ नाद्यः स्वोक्त्यैव जनस्था-

न एव गोदाप्रयुक्तमुंडनस्य जातत्वेन दशमासमध्ये पुनरप्राप्तेः ॥ नांत्यः ॥ कुशावर्तस्य गोदात्वेन महातीर्थत्वेपि स्वतंत्रतया तत्वाभावस्य प्रागुक्तत्वेन मुंडनविधेरप्रवृत्तत्वात् ॥ किंच भवद्भिरेव कुशावर्तगोदातीर्थयोः स्वग्रंथे भेदो दर्शितः अतस्त्र्यंबके गोदातीर्थप्रयुक्तमपि मुंडनं न स्यादित्यनर्थप्रसंग इत्यल-मापातत उक्तेरतिविचारेणेति दिक्" ॥ इत्युक्तं ॥ तन्न तथा गोदायां प्राक्-प्रतिपादितनियमविधिना बहुगुणोदये कुशावर्ततीर्थ एव प्रतिपदोक्तत्वेन मुंडनोपवासश्राद्धानां विधानात् ॥ तानि तत्र कृतानि चेदुभयगोदाकुशावर्त-प्रयुक्तानां प्रसंगसिद्धिर्भवति तथा कुशावर्ते च गोदायामिति वचनगौरवं भवतीत्युत्तरं तथा नर्मदायां कुशावर्त इति कौर्मस्थवचनेन तथा गंगाद्वारे प्रयागे चेत्याचारदर्पणधृतचवनेन च गोदाकुशावर्तयोः श्राद्धविषये पृथक्त्वेन नामग्रहणाद्गोदाविवेकादर्शकृद्भिस्तयोः पृथक्त्वं दर्शितमिति मे प्रतिभाति तथापि तयोरेकरूपत्वं तु पूर्वमेव प्रतिपादितमस्ति तथा कुशावर्त एव दुर्लभ-

तमत्वाद्यप्राप्तांशपूरणान्नियमविधिना विहि-तत्वात् त्र्यंबके कुशावर्ततीर्थं तेषां सत्वं नानर्थप्रसंगश्च तेनैव प्रमाणेन यथा काश्यां कृतमुंडनेन प्रयागे मुंडने कृते तथा प्रयागे कृतमुंडनेन काश्यां तस्मिन्कृते सति दशमासाऽभ्यंतरेपि तत्र दोषाय भवति तथा काम्यत्वेनाऽज्ञानतो वा जनस्थानादौ कृतमुंडनेन त्र्यंबकमागत्य कुशावर्ते तत्कृतं चेत्तन्न दोषाय भवति कुशावर्ते तस्य विधानात्तदाऽवश्यकत्वान्नित्यत्वाच्च ॥ ननु कुशावर्ते कृतमुंडनेन जनस्थानादौ काम्यत्वेन गोदाप्रयुक्तं तत्कृतं चेत्तन्न दोषाय भवतीति वाच्यं ॥ तन्न गोदांतर्गतकुशावर्ते तत्कृतत्वेन तत्प्रयुक्तस्य मुंडनादेर्व्यापकव्याप्यभावेन फलातिशयेन च तयोः प्रसंगसिद्ध्या जनस्थाने तस्याऽऽवश्यकत्वाऽभावात् ॥ तथा प्रतिपदोक्तत्वेन कुशावर्त एव तस्य नित्यत्वात् ॥ तथा संवत्सरे द्विमासोनेतिशास्त्रेण दशमासाऽभ्यंतरे तस्य पुनरप्राप्तेः ॥ निमित्तभेदेन तु तत्रवद्भवतु नाम ॥ अथवा गोदाविवेकादर्शाभिप्रायस्त्वेवमेव भवेत् ॥ किंच शास्त्राज्ञानतः केनापि

यात्रिकेण जनस्थानादितीर्थवृत्त्युपजीविना ब्राह्मणाना लोभान्मोहाच्छापभयाद्वाधुनिकादौकृत्वेति वचनत्रयदर्शनेन मुंडनोपवासश्राद्धादीनि पूर्वोक्तकारणैर्विना कृतानि चेदथवा तत्रत्यैर्ब्राह्मणैर्दर्शनाव्यवहितानि कर्तव्यानीति व्याजेन कारयितानि चेत्तानि व्यर्थानि स्युः ॥ ब्राह्मणानां तादृशप्रवृत्तिरेव परंतु याज्ञवाक्यः "लोभान्मोहाद्भयाद्वापि कृतं तदकृतं भवेत्" ॥ ततः जनस्थानादौ कृतस्य मुंडनादेरकृतमिव जातत्वेन संवत्सरे द्विमासोन इति शास्त्रस्याप्रवृत्त्या तथाच कुशावर्ते तस्य नित्यत्वात्तत्रैव तदावश्यकत्वं तेन भवतामनर्थ-प्रसंगशंकाप्यपास्ता ॥

तत्रैव "इदं मुंडनं दशमासानंतरं पुनर्गोदाप्राप्ता-वावश्यं कर्तव्यं तदुक्तं त्रिस्थलीसेतौ" 'संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि ॥ मुंडनं चोपवासं च ततो यत्नेन कारयेदिति दशमासमध्ये फलेच्छया कार्यं नत्वावश्यकमिति ॥ यत्तु तत्रैव गोदायात्राविवेकादर्शे जनस्थानादौ कृतमुंडनेन दशमासमध्ये त्र्यंबके गोदा-

प्राप्तौ मुंडनं कार्यं ॥ अत्र प्रमाणं प्रभासखंडे 'शंकरं मनसा ध्यायन्केशांस्तत्र परित्यजेत् ॥ तत्र त्यक्त्वा खिलान्केशान्भूयः स्नानं समाचरेत्' ॥ शिवपुराण उत्तरार्धे 'कुशावर्ते तु ये राजन्वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा भवंति ते' ॥ कौर्मे 'नर्मदायां कुशावर्ते गोदावर्यां विशेषतः ॥ येषु श्राद्धं तृप्तिकरम-नंतफलदं स्मृतमित्युक्तं' ॥ तन्न पूर्वोक्तवाक्यानां कुशावर्तादौ प्रथमगोदादर्शने मुंडनस्य कर्तव्यत्वविधिविषयत्वात् ॥ न तु जनस्थानादौ कृतमुंडनस्य दश-मासमध्ये पुनस्त्र्यंबकक्षेत्राधि-करणक-मुंडनप्रतिपादकत्वविषयत्वं ॥ प्रमाणाऽ-भावात् ॥ पूर्वोक्तवाक्येभ्यस्तथार्थाप्रतीतेश्च संवत्सरे द्विमासोन इति सर्वमहा-तीर्थविषयकत्वेन प्रवृत्तस्य वाक्यस्य त्र्यंबकक्षेत्रभिन्नविषयत्वमिति संकोच-स्थ-विनिगमक-मंतराऽयुक्तत्वाच्च ॥ दशमासमध्ये फलेच्छया भविष्यतीति चे-त्तुल्यं सर्वत्र गोदायामपीति त्र्यंबक इत्युक्तमित्यास्तां तावत् ॥ नन्वेवं प्रयागे कृतमुंडनस्य दशमासमध्ये काश्यां वपनाऽभावप्रसंगे शिष्टाचारविरोध इति

चेन्न ॥ तत्र चक्रपुष्करिणीतीर्थप्रयुक्तस्यैव शिष्टाचारविषयत्वात् ॥ न च काश्यां गंगाचक्र-पुष्करिणी-प्रयुक्तवपने पूर्वं जाते तु प्रयागे तदभावः प्राप्नोतीति वाच्यं ॥ तत्र प्रयागे तु योजनत्रयादागतस्य दशमासादर्वागपीति धर्माऽध्युक्तार्थकमुंडनविषयकविशेषवचनैः पूर्वोक्तवाक्यस्य बाधादिति मात्सर्यमुत्सार्य सुधियो विभावयंतु” इत्युक्तं ॥ तन्न तथा ॥ यतः देवलः ‘मुंडनं चोपवासश्च सर्वतीर्थेष्वयं विधि’ रिति सामान्यवचनेन तथा स्कांदे ‘मुंडनं चोपवासश्च गोदायां सिंहगे गुराविति’ सिंहस्थपूर्वप्रयुक्तमुंडनादिविधायकवाक्येन च गोदायां सर्वत्र तथा गोदांतर्गतत्वात्कुशावर्तेपि मुंडनादिके प्राप्ते शिवपुराणस्थ ‘कुशावर्ते तु ये राजन्निति’ तथा ‘प्रमादाद्यो नरो मूलमिति’ विशेषवाक्यद्वयेन गोदायामपि तद्विशेषस्थलाधिकरणके मूलस्थानभूते मत्पूर्वप्रतिपादितबहुगुणोदये श्रीमत्कुशावर्ततीर्थ एव नियमविधिना प्रतिपदोक्तत्वेन च विधानात् तत्कर्तव्यताकत्वं निर्गलितं भवति ॥ तथाच यथा त्रिस्थलीसेतौ

'ऊर्ध्वमब्दाद्विमासोनात्पुनस्तीर्थं व्रजेद्यदि ॥ तदा तद्वपनं शस्तं प्रायश्चित्तमृते द्विजेति' ॥ प्रायश्चित्तविषये तु दशमासाभ्यंतरेपि तद्भवतीत्यर्थः ॥ अन्यविषये संति दशमासाभ्यंतरे नित्यमुंडनकर्तव्यनिषेधे प्राप्ते ॥ त्रिस्थलीसेतौ 'प्रयागे प्रतियात्रं तु योजनत्रयमिष्यत इति' वचनबलाद्योजनत्रयवासिनोऽधिकयोजनत्रयवासिनो वोपरितननिषेधविधायकवाक्यादसति प्रयागपरप्रतिपदोक्तप्रतिप्रसवेपि यथा प्रतियात्रं मुंडनादेर्नित्यत्वं निर्गलितं भवति ॥ तथैव 'मुंडनं चोपवासश्चेति' देवलवचनेन तथा 'प्रमादाद्यो नरो मूलमिति' 'कुशावर्ते तु ये राजन्निति' समानधर्मिभ्यां वाक्याभ्यां गोदाया तथा कुशावर्ते पाक्षिके प्राप्ते तद्विशेषफलरूपाऽप्राप्तांशपूरणान्नियमविधिना कुशावर्ते तत्कर्तव्यत्वं निष्पद्यते ॥ तथा च 'मूलमध्याऽवसानेषु गोदा लभ्या कलौ युगे ॥ मुंडनं तत्र वै कुर्यात् तीर्थश्राद्धं विशेषत' इति वचनेनाऽलभ्यत्वाद्गोदायां स्थानत्रये मुंडनादौ प्राप्ते 'तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे

च सर्वत्र सुलभापिहीति' 'प्रमादाद्यो नरो मूलमिति' वचनाभ्यामन्यनिवृत्तिफलकेन परिसंख्याविधिना मूलभिन्नतीर्थद्वयस्य बाधान्मूलभूतकुशावर्त एवाऽकरणे दोषापत्त्या तत्सत्वमुपपद्यते ॥ प्रथमदर्शन एवेति स्पष्टोक्तिविनिगमकाऽभावात् तेन कुशावर्तभिन्नगोदांतर्गतान्यतीर्थेषु जनस्थानादिषु मुंडनादिविधेः प्रतिपदोक्त्याऽकथनात् लोभमोहशापभयशास्त्राऽज्ञानेभ्यो वा मुंडनादिकृतमपि याज्ञवल्क्यवचनानुरोधेन तदकृतवद्भूत्वा पुनर्दशमासाभ्यंतरेऽपि पुनर्दर्शनार्थस्याऽभावात्तन्न दोषाय भवति ॥ श्राद्धविषयेपि तथैव त्रिस्थलीसेतौ कौर्मे यथा 'नर्मदायां कुशावर्ते गोदावर्यां विशेषत' इत्यादिश्राद्धविषयक-मत्पूर्वदत्तवचनसामर्थ्यात् तथा गोदावर्यां विशेषतः कुशावर्त इत्यन्वयः विशेषतो नाम प्राधान्येन तत्र तत्कर्तव्यं न तु विकल्पो नाम कृताकृतमित्यर्थः नित्यकर्मणि तथाऽऽवश्यककर्मणि प्रथमदर्शनं द्वितीयं वा नेति नियमः प्रतिपदोक्तप्रसिद्धमहातीर्थे प्राप्ते विशेषकारणं विना दशमासाभ्यंतरे तत्रैव पुनर्द-

र्शनमंतरा तत्र मुंडनादिकं दर्शनाव्यवहितं कार्यमित्यर्थः ॥ काश्यां कृत-
मुंडनेन 'प्रयागे प्रतियात्रं त्विति' वचनेन तत्कर्तव्यमिति सिद्धं परं च
प्रयागे कृतमुंडनेन काश्यां तत्कर्तव्यमिति भवद्भिरप्यंगीक्रियते ॥ तत्कुतः?॥
किं तत्र विनिगमकं ?॥ किंच ॥ यथा त्र्यंबकक्षेत्रं तथैव काशीक्षेत्रं ॥
उभयत्र ज्योतिर्लिंगरूपः शंकरो देवः प्रसिद्धः ॥ काश्यां भागीरथी नदी
त्र्यम्बके भवत्संमता दुर्लभतमा श्रेष्ठतरा च गौतमी ॥ तत्र भागीरथ्यंतर्गत-
मणिकर्णिकातीर्थं त्र्यंबके गोदांतर्गतकुशावर्ततीर्थं भवन्मतानुरोधेन तत्र
शिष्टाचारः ॥ कुशावर्तविषये तु प्रतिपदोक्त्या मुंडनादेर्विधानमकरणे प्रत्यवा-
यश्चोक्तः पुष्करिणीतीर्थं किं मणिकर्णिकावच्छिन्नतीर्थं? ॥ तन्न ॥ भागीरथ्यं-
तर्गतत्वात् ॥ पश्यंतु भवंतः ॥ त्रिस्थलीसेतौ काशीप्रघट्टके इमानि वचनानि
ब्रह्मवैवर्ते कामकपोलाख्याने 'आगत्य मणिकर्ण्यां तु स्नात्वा दत्वा धनं बहु ॥
वपनं कारयित्वा च स्थिता शुद्धा पयोव्रतेति ॥' त्रिस्थलीसेतौ काशीखंडे व्यास-

वचनम् ॥ 'निशामय महाप्राज्ञ लोमहर्षण वच्मि ते ॥ यथा प्रथमतो यात्रा कर्तव्या यात्रिकैर्मुदा ॥ सचैलमादौ स्नात्वा तु चक्रपुष्करिणीजले ॥ संतर्प्य पितृदेवांश्च ब्राह्मणानां यथाविधि' ॥ तथाच त्रिस्थलीसेतौ काशीप्रघट्टके पाद्मे च 'चक्रपुष्करि-णीतोये जान्हवीजलसंप्लुते ॥ स्नात्वा नाभ्यर्चितः शंभुर्देवदेवः सनातनः ॥ द्वैपायने दंभवतो धर्मबाधनचेष्टितं' ॥ त्रिस्थलीसेतौ काशीखंडे शिवशर्मोपाख्याने 'आगत्य दृष्ट्वा मणिकर्णिकायामुदग्वहां स्वर्गतरंगिणीं सः ॥ सचैलमाप्लुत्य जलेऽमल' इति लिंगाद्विध्युक्तमार्गेण स्नायात् ॥ इदं च तथाविधस्नानं वपनानंतरं कार्यं ॥ 'पूर्वमावाहनं तीर्थे मुंडनं तदनंतरं ॥ ततः स्नानादिकं कुर्यात् पश्चात् श्राद्धं समाचरेदिति' काशीप्रघट्टके 'चक्रपुष्करणी चैव ख्याताभून्मणिकर्णिका ॥ तथा काशीप्रघट्टके 'आगंगा केशवाच्चैव आहरिश्चंद्रमंडपात् ॥ आमध्यदेवसरितः स्वद्वारान्मणिकर्णिका' ॥ मुंडनादिविषये तु काशीखंडे 'तीर्थोपवासः कर्तव्यः शि-रसो मुंडनं तथा ॥ शिरोगतानि पापानि यांति मुंडनतो यतः ॥ "गंगां प्राप्य सरिच्छ्रेष्ठां

वपनं यो न कारयेत् ॥ स कोटिकुलसंयुक्तमाकल्पं रौरवं व्रजेत् ॥" इदं वचनं तु गंगापदवाच्यगौतमीभागीरथ्योः समानं ॥ एकप्रकृतिकत्वात् ॥ उपरितनप्रामाण्येनैव यथा गंगाकाशीमणिकर्णिकाप्रयुक्तं मणिकर्णिकायामेकमेव मुंडनं (वपनं) भवति न केवलं शिष्टाचारः तथा गोदात्र्यंबकक्षेत्रकुशावर्ततीर्थप्रयुक्तं मुंडनं कुशावर्त एव भवति तत्प्रतिपादकानि वचनानि स्कांदे 'मूलमध्याऽवसानेषु गोदा लभ्या कलौ युगे ॥ मुडनं तत्र वै कुर्यात् तीर्थश्राद्धं विशेषतः' इत्यस्य यथा 'त्र्यंबके चाब्जके चैव गोदासागरसंगमे ॥ सर्वत्र सुलभा गोदा त्रिषु स्थानेषु दुर्लभा ॥ त्र्यंबकं चाब्जकं चाब्धेः संगमाख्यं च जन्मिनां ॥ अतःस्थानत्रयं त्वेतद्दुर्लभं मम वारिधे ॥ तस्मात् त्र्यंबक एवैषा दुर्लभा सरितां वरा ॥ अब्जके सिंधुसंगे च सर्वत्र सुलभा पि हि' ॥ इत्युपसंहारकवचनयुगुलेन तथा 'प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं नरकं चाधिगच्छती' त्यनेन नरकप्राप्तिरूपदोषदर्शनेन । तथा 'कुशावर्ते तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा

भवंति त' इतिमूलस्य कुशावर्तमिति नाम्ना स्पष्टप्रतिपत्तिकारकेण विशेषफलदत्व-
दर्शकेण मुंडनादिविधायकेन च तथा॥ 'शंकरं मनसा ध्यायन् केशांस्तत्र परित्यजेत्॥
तत्र त्यक्त्वाखिलान् केशान् भूयःस्नानं समाचरेत्' ॥ इति शिवक्षेत्रे मुंडनविधा-
यकवचनेन च काश्यां यथा भागीरथ्यंतर्गतसचक्रपुष्करिणी मणिकर्णिकावद्गो-
दाकुशावर्तयोर्व्यापकव्याप्यभावेन कुशावर्त एव मुंडनोपवासश्राद्धानि सकृदेव
कार्याणि॥ उभयक्षेत्रवर्तितीर्थविधिविधायकवचनानां मध्ये कोपि भेदो नास्ति॥
यथा॥ भागीरथ्यंतर्गते प्रयागे कृतमुंडनेन दशमासाभ्यंतरेपि काश्यां मणिकर्णि-
कातीर्थे मुंडनादिकं कार्यमिति तद्विधायकवचनैर्निष्पद्यते ॥ तथैव गोदायां तु
तदंतर्गतान्यसर्वतीर्थानि विहाय केवलं मूलस्तंभभूते कुशावर्ततीर्थ एव तद्विशेष
विधानात्तद्विहितवचनैस्तंनियम्यते॥ अन्येषां प्रतिपदाविहितत्वाऽभावात्॥ ननु
प्रयागकाश्योर्भागीरथ्यंतर्गतत्वे सति यथोभयत्र मुंडनादिकं भवति तथैव गोदां-
तर्गतकुशावर्ते तथा जनस्थानादिषु तीर्थेष्वपि सर्वत्र गोदांतर्गतत्वान्मुंडनादिक-

मिति वाच्यं ॥ तन्न ॥ तेषां कुशावर्तभिन्नानां तीर्थानामप्रतिपदोक्तत्वादविव-
क्षासत्वात् ॥ अतएव गोदाविषये मुंडनोपवासौ कुशावर्ते सकृदेव कार्यौ
नान्यत्र गोदायां कार्याविति निष्कर्षः ॥ पूर्वोक्तवचनानुरोधेन श्राद्धमपि त-
थैव ॥ गोदायां यत्र कुत्रापि कार्याणीत्युक्तवतां केवलं स्वोपजीवनहेतुत्वेन
मात्सर्यं ॥ यत् मत्सरकृतं तन्मात्सर्यमुत्सार्य कथं सुधियो विभावयिष्यंत १ ॥

गो. नि. चंद्रिकायाः पंचदशपृष्ठे "अथ गोदातीरवासिभिरपि सिंहस्थिते सुरगुरौ मुंडनं कार्यं ॥ केचित्तु तैर्मुंडनं न कार्यं किंतु महोत्सवः कार्यः ॥ 'मुंडनं चोपवासश्च गोदायां सिंहगे गुरौ ॥ कन्यागते तु कृष्णायां न तु तत्तीरवासिनां ॥' तत्तीरवासिभिः कार्यः स्नानार्थं च महोत्सवः ॥ न मुंडनादिकं तेषां नचाभ्युदयिकं तथेति' ॥ तत्तुच्छमित्युक्तं चंद्रिकाकारेण" परं चेदं तीरवासिपरमपवादकवचनं निर्णय-
सिंध्वादिनिबंधधृतब्रह्मपुराणस्थं तस्य तुच्छीकरणं तादृशविनिगमकं विना न
प्रशस्तं ॥ तथा च तीरवासीशब्दस्ताच्छील्येणिन्यंतः ॥ शीलं स्वभावे सद्वृत्त

इति कोशात्स्वभावसद्वृत्तान्यतरं शीलं पदार्थः ॥ क्षीरिणो वृक्षा इतिवन्नित्ययो-
गमत्वर्थीये निप्रत्ययांतो वेत्यादिव्याख्यानं तत्रैव कृतं परं च कौमुदीसंज्ञक-
व्याकरणग्रंथे स्वभावार्थणिनिप्रत्ययस्य उष्णभोजी शीतभोजीत्युदाहरणे
दत्ते तादृशशीलेन कतिपयदिनानि ये तीरवासं कुर्वंति तेषां ग्रहणमपवादे
मा भवतु परं च येषां परंपरया बहुशो गृहकुटुंबकजीवनोपायास्तीर एव वर्तंते
ते तीरवासिनस्तेषां ग्रहणमपवादवचने स्यादेव क्षीरिणो वृक्षा इति वन्नित्य-
मत्वर्थीये निप्रत्ययकार्यं तीरवासिशब्दे प्रसह्यारोप्य तस्यार्थस्य प्रयोजनं
नास्तीति मे प्रतिभाति ॥ ब्रह्मणापि तादृशं गूढहृद्यमपवादे नानुमीयते ॥
तथा सिंहस्थमाहात्म्यस्य पुरातनहस्तलिखितग्रंथउपरितनवाक्यद्वयं दत्वा
"आद्या सा गौतमी गंगा द्वितीया जान्हवी स्मृता ।" "सर्वतीर्थफलं स्नाना-
द्गौतम्यां सिंहगे गुरौ" ॥ स्नानान्नाम विधिवत्स्नानादित्यर्थः ॥ तथा ग्रंथां-
तरादपवादकं वा वैकल्पिकं वचनं दत्तं यथा "तीरस्थोवाप्यतीरस्थः कुर्यात्

क्षौरोपवासकौ ॥ कन्यागते तु कृष्णायां गोदायां सिंहगे गुराविति" 'तथा मुंडनादिकं कर्तव्यं वा नवेति विकल्पः। भावे विधिरिति व्याख्यापि दत्ता कर्तव्यत्वविषये तु शिष्टाचारो बलीयान् ॥ नासिकप्रतिष्ठानादि गोदातीरस्था अपि बहुकालपर्यंतं त्र्यंबकक्षेत्रमागत्य कुशावर्ते सिंहस्थिते सुरगुरौ तीर्थयात्रां कुर्वंतिस्म ॥ निरभिमानिनस्त्वद्यापि तत्र गत्वा कुर्वंति ॥ तत्र तत्स्वहस्तलेख्यदर्शनात् ॥ अधुनातु मात्सर्यं नोत्सार्य तीर्थोपजीविनो न कुर्वंत्यस्तु नाम ॥ त्र्यंबकस्थानां तथाऽन्येषामपि बहूनां तीर्थवासिनामाचारो बलीयान् ॥ इदं वपनं विधवायतिशूद्रैरपि गोदाविषये कुशावर्ते कार्यं तेषां सशिखं वपनमिष्टं जीवत्पितृकेण कृतमपि न दोषाय "गंगायां भास्करक्षेत्रे मातापित्रोर्मृतेऽहनि ॥ आधाने सोमपाने च षडेते जीवतः पितुरिति" ॥ जीवतः पितुः पुत्रस्यैते षड् वपनकाला इति शेषः ॥ अत्र गंगापदं गोदाभागीरथीमात्रपरं ॥ तयोः पूर्वोक्तैर्वचनैर्युक्तत्वदर्शनात् ॥ परं च बहुकालपरंपरया प्रयाग एव तस्य प्रवृत्तिः श्रूयते ॥

गर्भिणीपतिना तस्मिन्कृते न दोषः। यथाहाऽऽश्वलायनः "न कुर्यात् तीर्थयात्रां च शुभकृद्गर्भिणीपतिः ॥ न गच्छेच्छुभकृत्तीर्थं गुरौ सिंहे न दुष्यति" ॥ नाम सिंहगे गुरौ गोदायात्रा गर्भिणीपतिनापि कार्या ॥ तन्निमित्तमुंडनमपि प्रसज्यत इति भावः ॥ वपनप्रकारः ॥ तीर्थतीर उदङ्मुखः प्राङ्मुखो वा वपनं कारयेत् ॥ तत्कक्षोपस्थवर्जं कार्यं ॥ क्रमेण केशश्मश्रुलोमनखानि वापयेत् ॥ तीरे गर्तं कृत्वा तत्र वापितकेशादीनि प्रक्षिपेत् ॥ तानि तीर्थे वायुनुन्नानि तु शुभदानीति श्रूयते ॥ मुंडनाऽभावे द्विगुणं व्रतं ॥ तथा द्विगुणदक्षिणा ॥ अथ मुंडनकालस्तदपवादाश्च ॥ भौमशनिवासरयोस्तथा चतुर्थीनवमीचतुर्दशीषु रिक्तासु तिथिषु तथा द्वितीयासप्तमीद्वादशीषु च भद्रायां च वपनं न कारयेत् तथा विवाहमौंजीचूडाकरणकालाद्वर्षपर्यंतं षण्मासपर्यंतं मासत्रयपर्यंतं वा पवनं न कार्यं। सिंहस्थिते सुरगुरौ तु गोदायां

मुख्यत्वेन कुशावर्त उपरितननिषिद्धकालेपि तत्कार्यमित्यर्थः ॥ गंगां प्राप्येति गयां गोदावरीं विनेति पूर्वोक्तप्रामाण्यात् ॥ इति त्रितीयोद्देशः ॥

अथ तीर्थप्राप्तौ कर्तव्यं यथाशक्ति द्रव्यफलादि तीर्थसमीपे संस्थाप्य प्रणमेत् ॥ यथासंभवद्रव्यफलादिभिरर्घ्यपंचकं फलपंचकं च देयं ॥ स्नान-संकल्पं कृत्वा सचैलं स्नानं कुर्यात् ॥ तीर्थाऽऽवाहनपूर्वकं मुंडनं कार्यं ॥ यात्रांगत्वेन पूर्वोत्तरांगप्रायश्चित्तं प्रयोगानुसारेण कर्तव्यं ॥ अशक्तत्वेतु तद्यथाशक्ति कार्यं ॥ दशदानानि देयानि ॥ तीर्थे नित्यवत्तिलतर्पणं ॥ विधवयापि भर्तुस्तर्पणं कार्यं ॥

अथ तीर्थश्राद्धविचारः तीर्थसमीपे नाम तीरेपि श्राद्धे कृते न दोषः ॥ तच्च सपिंडकं कार्यं ॥ अन्यस्य गृहे तस्मिन् कृते स्वामिनः तत्स्वामित्वार्थं-किंचिन्मूल्यं दद्यात् ॥ अर्घ्याऽऽवाहनांगुष्ठनिवेशनविकिरतृप्तिप्रश्नान्येतानि तीर्थे पंच वर्ज्यानि ॥ अग्नौकरणं कृताकृतं ॥ स्वसूत्राऽनुरोधेन ब्राह्मण-

हस्ते वाऽग्नौ होमः ॥ करणपक्षे ब्राह्मणहस्ते तत्कृतं चेदासनाद्बहिराचमनमाव-
श्यकं ॥ इदमाचमनं तु भक्षणपक्षेनाऽऽवश्यकं ॥ तीर्थसमीपेश्राद्धकरण-
पक्षे तूष्णीं जलेऽग्नौकरणं ॥ यस्मिन्तीर्थे प्रतिपदोक्त्या श्राद्धमुक्तं ॥ तत्र
तत्र तदाऽऽवश्यकत्वेन कार्यं ॥ अकरणे प्रत्यवायाऽपत्तेः ॥ इदं तीर्थश्राद्धं
महालयवत्समस्तपितृणामुद्देशेन कर्तव्यं ॥ काम्यविषये धूरिलोचनसंज्ञकवि-
श्वेदेवौ ॥ नित्यत्वे पुरूरवाऽऽर्द्रवौ ॥ धनुर्धरसंज्ञकविश्वेदेवयोस्तु प्रमाणं न
पश्यामः ॥ परं च तद्रूढिस्तु बलीयसी सर्वत्र प्रवृत्ता ॥ इदं श्राद्धं द्विजातीनां
पक्वान्नेनाऽऽवश्यकं प्रशस्तं च ॥ संकटविषये त्वामान्नेन हिरण्येन कंदमूलैर्वा
तिलतर्पणेन वा प्रसंगसिद्धिः ॥ पूर्वाभाव उत्तरोत्तरं ॥ शूद्राणामामान्नश्राद्धं
प्रशस्तं ॥ पुरुषाऽऽहारापेक्षया चतुर्गुणमामान्नं देयं ॥ अशक्तौ तु द्विगुणं ॥
तदसंभवे तद्दर्भबटूपरि कार्यं ॥ दर्भबटूपरिश्राद्धपक्ष अर्घ्यान्पिंडान्पृथक्

पृथक् दद्यात् ॥ तीर्थजलसमीपे श्राद्धकरणपक्षे विप्रादेरप्यामान्नश्राद्धं मुख्यं ॥ अथ पिंडद्रव्याणि ॥

गृहादौ द्विजातिभिः पक्कान्नेन तीर्थश्राद्धं कृतं चेच्चरुपिंडनिर्वापणं ॥ तथा तेनैवाग्नौकरणं ॥ तत्करणपक्षे सर्वथा श्राद्धाऽप्रसक्तौ सक्तुसंयावपिण्याकें-गुदानि पिंडद्रव्याणि ॥ पूर्वाभाव उत्तरोत्तरं ग्राह्यं ॥ संयावो गोधूमविकारः ॥ पिण्याकस्तिलकल्कः ॥ इंगुदं तापस-तरुफलं भाषायां हिंगणबेटेति ख्यातं ॥ अथ पिंडप्रमाणं ॥ कपित्थबिल्वामलकबदरफलप्रमाणेन कुक्कुटांडप्रमाणेन वा पिंडं दद्यात् ॥ अशक्तपक्षे शमीपत्रप्रमाणं तत्राप्यशक्तौ तिलतर्पणं ॥ यदैक-स्मिन्महातीर्थेऽवांतरतीर्थप्राप्तिरेकदिनएव, तदा तत्तत्तीर्थनिमित्तभेदात् ॥ दर्शे ग्रहणश्राद्धवत् ॥ अथवा दैवतैक्यात्तेषामूहः कार्यः ॥ भिन्नदिने प्राप्तिश्चे-द्देवतैक्येपि भिन्नान्येव कार्याणि ॥ एकदिने भिन्ननिमित्तश्राद्धसंपाते श्राद्ध-द्वयमेव कार्यं॥ तीर्थश्राद्धदिने वार्षिके प्राप्ते देवताभेदात् ते पृथगेव कार्ये ॥

तत्रापि पूर्वं तीर्थश्राद्धं ॥ तीर्थश्राद्धमहालयोः संपाते ते पृथगेव कार्ये ॥ दैवतैक्येऽपि निमित्तभेदात् ॥ इदं तीर्थश्राद्धं दशमासानंतरं पुनस्तत्तीर्थप्राप्तौ तीर्थयात्रामागतस्य मुंडनमिवाऽऽवश्यकं 'संवत्सरे द्विमासोने पुनस्तीर्थं व्रजेद्यदि॥ मुंडनं चोपवासश्चेति चकारात् ॥ श्राद्धस्यापि संग्रहः तुल्यन्यायात् ॥ येनकेनैकदा कुशावर्ततीर्थप्रयुक्तश्राद्धं कृतं चेत्पुनर्दशमासाभ्यंतरे तत्प्रयुक्तं श्राद्धं तेन मुंडनवन्न कार्यं ॥ अन्यत्र विहिततीर्थे तन्न दोषाय ॥ इदं तीर्थश्राद्धं जीवत्पितृकेण पितुःस्थानापन्नत्वेन कार्यं ॥ तीर्थेंदुशेखरे ॥ 'वृद्धौ तीर्थेच संन्यस्ते तातेच पतिते सति ॥ येभ्य एव पिता दद्यात् तेभ्यो दद्यात्स्वयं सुत' इति ॥ परं च गयां विना नान्यत्र रूढिः ॥ इदं गयातिरिक्तं षड्दैवत्यं नित्यम् ॥ एकोद्दिष्टं कृताकृतं ॥ विधवयाऽपुत्रवत्या भर्तुरुद्देशेन कार्यं ॥ भर्तृपार्वणं स्वपितृपार्वणं चात्र मुख्यं ॥ केचित्तुश्वश्वादिपार्वणं मातृपार्वणं मातामहपार्वणं चाहुः ॥ एकोद्दिष्टमप्याहुः ॥ गृहप्रत्यागमनेपि यात्रारंभवदिदं कार्यं अत्र शिष्टाचारतो व्यवस्था ॥

अत्रास्थिनिक्षेपविधिस्त्रिपिंडीश्राद्धविधिस्तत्फलं च निर्णयसिंध्वादौ द्रष्टव्यम् ॥
अथैकवस्त्रस्नानं ॥

इदं वंध्यात्वनाशनं दुःखवैधव्यनाशनं चाऽस्त्येव ॥ काकवंध्यात्वं, बकवंध्यात्वं, केवलवंध्यात्वमिति वंध्यात्वत्रयं॥ सामान्यतो मृतवंध्यात्वमित्याहुः ॥ तद्दोषपरिहरणसमर्थमिदमेकवस्त्रस्नानं ॥ तादृशभार्यया सहेदं शुभमासे भानुवासरे पूर्णिमाऽमावास्यादिपर्वसु पत्या तीर्थे कार्यं विशेषेण संगमे कार्यं ॥ अस्य विधिः स्कंदपुराणे द्रष्टव्यः ॥ अथ सिंहस्थिते सुरगुरौ गोदासुरगुर्वादिपूजादिनिर्णयः ॥ गोदातीरे गृहे देवालये वाऽष्टदलपत्रे कुंभं स्थापयेत् ॥ तदुपरि ताम्रपात्रं तदुपर्यासनार्थं नववस्त्रं न्यसेत् ॥ तत्र रजतमयीं गोदाप्रतिमां तथा षोडशमाषप्रमाणसौवर्णीं गुरुप्रतिमां रौप्यसिंहस्थितां संस्थाप्य तेषां षोडशोपचारपूर्वकं पूजनं भक्त्या कृत्वा तथा धर्मरूपं वृषभं संपूज्य ब्राह्मणान् संपूज्य यथाशक्ति दानं देयं ॥ अग्निं संस्थाप्य बृहस्पतेइतिमंत्रेणाष्टोत्तरशत-

संख्याकाभिस्तिलं सर्पिषाऽऽहुतिभिर्जुहुयात् ॥ होमस्यांते सवत्सां गां दद्यात् ॥ तत्सर्वं तीर्थगुरवे यात्राफलसिद्ध्ये निवेदयेत् ॥ यथाशक्ति ब्राह्मणदंपतीभोजनमपि देयं ॥ सिंहस्थ-गुरुनिमित्तयात्रातिरिक्ततीर्थयात्राप्रसंगे तत्फलावाप्त्यर्थं गोदापूजनं ब्राह्मणदंपतीभोजनं सवत्सगोदानं ब्राह्मणपूजनं तीर्थो-पाध्याय-पूजनं चावश्यकं ॥ गोदोत्पत्तिस्थानभूते श्रीत्र्यंबकक्षेत्रे द्वादशज्योतिर्लिंगेभ्यो राजपदान्वितत्र्यंबकनामकज्योतिर्लिंगस्यापि यथोक्तविधिना यात्रा कार्या ॥ उभयोस्तत्र प्रसंगात् ॥ श्रीमत्र्यंबकेश्वरयात्राविधिपांक्तप्रयोगस्तु रुद्रयामले तथा गोदाविवेकादर्शे द्रष्टव्यः ॥ इति शमिति चतुर्थोद्देशः समाप्तः ॥

यात्राक्रमः ॥ गो० नि० चंद्रिकायाः षोडशपृष्ठे ॥ “पूर्वं रामं ततो देवं त्र्यंबकं लोकशंकरं ॥ गंगाद्वारं च तद्दृष्ट्वा को वा पापैर्न मुच्यते” ॥ इति शिवपुराणवाक्येन “दृष्ट्वा रामं पंचवट्यां ततो देवं तु त्र्यंबकं ॥ पश्येत्पुना रामचंद्रमेष यात्राक्रमः स्मृतः ॥ क्रममुल्लंघ्य यो गच्छेत्तस्य यात्रा तु निष्फला ॥ कृतं दानादिकं यद्यत्तत्सर्वम-

कृतं भवेत् ॥ तथा ॥ "आदौ गत्वा जनस्थाने कृत्वा च विधिपूर्वकमिति वचनत्रयं चेति द्विप्रकरणोक्तस्कंदपुराणवाक्यैश्च बोधिता नासिकत्र्यंबक इत्युभयक्षेत्रक्रमयात्रामुख्येत्युक्तं ॥ तत्तुच्छं ॥ रामचंद्राऽवतारजनस्थानसंज्ञाप्रादुर्भावात्प्रागेव पृथिव्यां श्रीगोदात्र्यंबकराजयोः सत्वात् ॥ तथा द्वापरे कलौ च सा कर्तव्येति कालदर्शकप्रतिपदोक्तप्रमाणाऽभावात् ॥ तथा त्र्यंबकक्षेत्रवर्तिश्रीमत्र्यंबकराजगोदांतर्गतकुशावर्तयोः कृतयुगे यात्राप्रवृत्तिसत्वात् ॥ यतः स्कंदपुराणे श्वेतभूपतिविष्णुदत्तवैश्ययोः कृतयुगे यात्रापुरावृत्तकथनं प्रसिद्धं ॥ तथा च भवद्ग्रंथ एव भिन्नभिन्नस्थले परस्परं संदर्भव्यतिरेकापत्तेः ॥ यतः भवद्ग्रंथस्य द्वादशपृष्ठस्योत्तरार्धे भवद्भिरेव "न तु क्रमयात्रापरत्वमिति भ्रमरूपप्रमादेन मूलस्थानं त्यक्त्वा जनस्थानमागत्य मुंडनं कृतं तस्य रौरवप्राप्तिर्विधीयत इति प्रथमदर्शनमिषेण स्वीकृतं ॥ अत्र तु 'क्रममुल्लंघ्य यो गच्छेत्तस्य यात्रा तु निष्फला ॥ कृतं दानादिकं यद्यत्तत्सर्वमकृतं भवेत् ॥ पूर्वो-

क्तान्यतरादिक्षेत्राधिकरणककेवलगोदायात्रा मध्यमा ॥ एभिर्वाक्यैः मूलं स्थानं त्यक्त्वा जनस्थान आगते रौरवप्राप्तिरिति भवद्भिरेव स्वीकृतं ॥ अक्रमयात्रापक्षे तन्निष्फलत्वं माध्यं च दर्शितं ॥ परंच नरकरूपदर्शनात्तु तदाऽऽवश्यकत्वं ज्ञापितं भवति ॥ तर्हि तादृशयात्राया युगपदेवाऽकरणे दोषदर्शनं माध्यं निष्फलत्वं च कथं संभवते ? ॥ एतावतोपरितनवचनानामसंभवव्यतिरेकादिदोषप्राप्त्या वैय्यर्थ्यमेवोपपद्यते ॥ तेन विद्वज्जना एव तत्सत्यत्वासत्यत्वे विचारयंतु ॥ पिष्टपेषणेनालं ॥

सप्तदशपृष्ठस्योत्तरार्धे ॥ 'तत्र नाशिकक्षेत्रे विध्यनतिक्रमेण वपनश्राद्धादि पंचवट्यां रामदर्शनं च कृत्वा त्र्यंबकक्षेत्रे गंतव्यं ॥ तत्र मुंडनवर्ज्यं ॥ कुशावर्तप्रयुक्तश्राद्धं त्र्यंबकदर्शनं च कृत्वा पुनः पंचवट्यां श्रीरामचंद्रदर्शनं संसाध्य गृहे गमनं कार्यमिति क्रमः ॥ पूर्वोक्तान्यतरादिक्षेत्राधिकरणककेवलगोदायात्रा मध्यमा ॥ एकक्षेत्रानुग्रहविशिष्टगोदानुग्रहसाधकत्वात् ॥ क्षेत्रा-

धिकरणकगोदायात्रात्वव्यवहितपूर्वापेक्षया न्यूनफलका ॥ गोदानुग्रहमात्र-
साधकत्वात् ॥ तत्रांत्ययोर्यात्रयोर्वपनश्राद्धादि सर्वं तत्रैव निर्वर्त्यं ॥ नाशिक-
त्र्यंबकक्षेत्रगमने त्वरुणावरुणासंगमकुशावर्तप्रयुक्तं वपनातिरिक्तं श्राद्धादि
कृत्वा गृहे गंतव्यं ॥ नाशिकादौ गमनाभावे तु गृहएव गमनं कार्यमिति-
शिवमित्युक्तं ॥ तत्तु व्यर्थपांडित्यात्तुच्छं ॥ क्रमयात्रासंबंधिभवद्दत्तवचनानां
प्राक् प्रतिपादिताऽसंभवविरोधादिदोषदर्शनादतएवाऽविश्रंभकत्वात् ॥ असंभ-
ववक्तृणां वचनानां वीप्सया प्रमाणदार्ढ्यं नोपपद्यते ॥ तर्हि दोषदार्ढ्यमेव ॥
वस्तुस्थित्यापि नाशिकत्र्यंबकक्षेत्रयोर्मध्ये सपादयोजनद्वयपरिमितमंतरं प्र-
सिद्धं ॥ नाशिकक्षेत्रस्य माहात्म्यं त्वेकक्रोशावध्येवोक्तं ॥ यथा स्कांदे 'गो-
दायाः संनिधौ पुण्यं नासिकं नासिकोपमं ॥ तत्र माहेश्वरं लिंगं कपालेश्वरनामकं ॥
अरुणावरुणयोर्मध्ये यत्र गोदावरी नदी ॥ तत्क्षेत्रं क्रोशमात्रं तु वाराणस्या यवाधिकं' ॥
तस्मादेव नासिकत्र्यंबकयोर्बह्वंतरान्नैकक्षेत्रत्वं न च तयोर्यात्राक्रमः संभ-

वति ॥ यात्राक्रमस्त्वेक एव क्षेत्रे ॥ त्रिस्थलीनामका या काशीप्रयागगया-
संबंधिनी प्रसिद्धा यात्रा तस्याअपि परस्परक्षेत्रसंबंधेन कोपि यात्राक्रमः
शास्त्रतो नोक्तः ॥ यात्रिकवसतिस्थलानुरोधेनानुलोमप्रतिलोमप्रकारेण क्वापि
क्षेत्रे यात्रामारभ्य क्वापि समापनीया ॥ क्षेत्रत्रये तदा चरणं विना सा न
संपूर्णा परिपूर्णा वा भवतीत्यर्थः ॥ नासिकं तु गोदाया न मूलं न शास्त्रप्रा-
माण्येन मध्योऽवसानं वा ॥ गोदोत्पत्तिस्तु त्र्यंबकक्षेत्र एव शास्त्रसिद्धा ॥
वस्तुतस्तूत्पत्तिक्रमेण यात्राक्रमग्रहणं युक्तं ॥ तेन यात्रोद्दिष्टसर्वकर्मणामारं-
भोपि मूलभूतक्षेत्रवर्ति कुशावर्ततीर्थ एव प्रशस्तो नित्यश्च ॥ तेन गोदावि-
षयकौ मुंडनोपवासावपि तीर्थदर्शनाव्यवहितौ कार्यौ इत्यापाततस्तत्रैव तौ
प्रयुज्येते ॥ नान्यत्र गोदादर्शने प्राप्ते ॥ गोदोत्पत्तिकालेपि गौतममहर्षिदेव-
र्षिमुन्यसुरमनुष्याणां गोदायाः प्रथमदर्शनजातस्नानादिकं मूलभूते कुशावर्ते
एव जातं ॥ न तु युगपत्पश्चाज्जातेषु सागरावधिषु जनस्थानवर्त्तीर्थेष्विति

बालैरपि तर्कनीयं ॥ तस्मान्मूलभूतकुशावर्त एव गोदायात्रारंभो युक्तः ॥ तथैव शास्त्रसंमतिः ॥ अकरणे नरकप्राप्तिस्तत्करणे तु विशेषफलं यथा स्कांदे 'प्रमादाद्यो नरो मूलं हित्वान्यत्र विशेषभाक् ॥ करोति मुंडनं श्राद्धं नरकं चाधिगच्छती' ति ॥ सौरपुराणे 'कुशावर्ते तु ये राजन् वपनं च यथाविधि ॥ कुर्वंति तेषां पितरः शिवरूपा भवंति ते ॥ यात्राक्रमस्यांगीकारेपि मूलमारभ्य सागरपर्यंतमूले मुंडनोपवासश्राद्धादि कृत्वा तीर्थमाहात्म्यानुरोधेन तीर्थे विधिवदाचरणं कृत्वा गोदासागरसंगमे या समापनीया सैव मुख्या न भवत्संमता मुख्या ॥ तथापि कलिकालवशेन सुकृताभावात्तथा द्रव्यशरीरदौर्बल्याद्गोदायां कुशावर्ते यात्रामारभ्य यत्रकुत्रापि समापनीया चेन्मध्यमा ॥ कुशावर्तं विहाय क्रमातिक्रमेण यत्र कुत्रापि शरीरद्रव्यदौर्बल्यं विना सा कृता चेन्निष्फला ॥ पूर्वोक्तकारणैः कृत्वा चेत्त्वधमा ॥ अकरणान्मंदकरणं वरमिति न्यायात् ॥

अथ नागनारायणबलिकर्मविचारः ॥ इदं तु काम्यं कर्म प्रेतोपद्रवादिसं-

ततिप्रतिबंधशरीरपीडानाशकं चैतत् ॥ स्मृतिपुराणेतिहासादिषु प्रसिद्धं ॥ विंध्याद्रिदक्षिणभागे तु गोदामूलभूते श्रीमत्त्र्यंबकक्षेत्रे एव तद्विहितं ॥ शास्त्रतस्तथा फलातिशयत्वादत एवाऽलौकिकाविगीतशिष्टाचारविषयत्वात् ॥ गो० नि० चंद्रिकायाः द्वात्रिंशत् पृष्ठे अथ नागनारायणबलिविचारः ॥ प्रेतोपद्रवादिपीडानाशककाम्यनागनारायणबल्यादिकर्माणि यत्र क्वापि गोदायां कार्याणि प्रसिद्धनाशिकत्र्यंबकक्षेत्राधिकरणकगोदायां त्वतिपुण्यदानि ॥ ननु त्र्यंबकक्षेत्रवर्तिगोदायामेव तेषां कर्तव्यत्वं नान्यत्रेति चेन्न ॥ महाप्रामाणिकनिर्णयसिंधुसंस्कारकौस्तुभादिधृतपूर्वोक्तकाम्यकर्मविधायकवाक्येषु नदीतीरादिशुचिदेशातिरिक्तस्थानानुक्तेः ॥ शुचिस्थलाधिकरणकमहातीर्थवत्त्वेन त्र्यंबकक्षेत्रे चेत्तुल्यमन्यक्षेत्राधिकरणकगोदायामपि ॥ अतएव गोदायात्राविवेकादर्शकृतां इतिहासप्रकरणपठितत्र्यंबकक्षेत्राधिकरणकं नागबल्यादिविधिप्रतिपादकवाक्यानां धर्मव्यवस्थापकश्रुतिस्मृतिपुराणस्थत्वानुक्तिः संगच्छते ।

एवं च नासिकत्र्यंबकावंत्यादिक्षेत्रेषु पूर्वोक्तकाम्यकर्मकरणविषयकशिष्टा-
चारोपि युक्त एवेतिदिगित्युक्तं तन्न तथा ॥ अत्र किंचित् तारतम्येन विचा-
र्यते ॥ श्रीमत्र्यंबकक्षेत्रं तु महानदीतीरस्थाऽतिपावनप्रदेशः श्राद्धविषये
यथा निर्णयसिंधौ 'सह्यस्य चोद्भवो यत्र यत्र गोदावरी नदी ॥ पृथिव्यामपि
कृत्स्नायां स प्रदेशोतिपावनः ॥ तत्क्षेत्रवर्तिकुशावर्तादेव महानदीत्वं तेन
तत्र महानदीत्वे सति सर्वस्यामपि पृथिव्यामतिपावन इत्युक्तत्वेनैवायं प्रदेशः
सर्वपावनदेशेभ्योप्यधिकः श्राद्धविषय इति ज्ञाप्यते ॥ नागबल्यादिविधिस्तु
प्रेतत्वनिवृत्त्योत्तमलोकावाप्त्यर्थं तथा संततिप्रतिबंधनाशकोऽस्ति ॥ तत्रापि
श्राद्धकर्मण आवश्यकत्वं प्रेतत्वनिवृत्त्यर्थं ॥ तत्र प्रदेशे न केवला महानदी
तर्हि गोदाहल्यासंगमोपि ॥ एतत्तु भूतनाथस्य ज्योतिर्लिंगरूपश्रीमत्त्र्यंबक-
राजस्य क्षेत्रं तदपि महाक्षेत्रं यथा स्कांदे 'काशीपुरी च केदारो महाकालोथ ना-
सिकं ॥ त्र्यंबकाख्यं महाक्षेत्रं पंचदीपा इमे भुवि' ॥ महाक्षेत्रं नाम सर्वक्षेत्रेषु श्रेष्ठतमं
दीपश्च यथा स्कांदे पाद्मे च 'एकतः सर्वतीर्थानि त्र्यंबकक्षेत्रमन्यतः ॥ तुलया

तोलयद्धाता त्र्यंबकं तु विशिष्यते ॥ त्र्यंबकक्षेत्रमाहात्म्यं वक्तुं शक्तो न कश्चन ॥ यथा मेरुर्गिरींद्राणां सरसां सागरो यथा ॥ नक्षत्राणां यथा चंद्रो ग्रहाणां भानुरेव च ॥ नदीनां च यथा गंगा यथा रामो नृपेषु च ॥ तथेदं त्र्यंबकक्षेत्रं सर्वक्षेत्रेषु पठ्यते ॥ नासिकं तु केवलक्षेत्रं यथा तीर्थदर्पणे ब्राह्मे नासिकं च प्रयागं च पुष्करं नैमिषं तथा ॥ पंचमं च गयाक्षेत्रं षष्ठं पुत्र न विद्यते ॥ तत्राप्यतिपावनगोदामूलभूतश्रीमत्कुशावर्ततीर्थं तुलनारहितं वर्तते ॥ यथा 'कुशावर्तसमं तीर्थं नास्ति ब्रह्मांडगोलके' ॥ इत्यादि भवद्ग्रंथधृतवाक्यैर्मद्दत्तैरपि सर्वक्षेत्राणां श्रेष्ठतमं ॥ तस्मान्महानदीगोदांतर्गतकुशावर्तगोदाहल्यासंगमवदतिपावनदेशवर्तिश्रेष्ठतमं दीपभूतं तुलनारहितं महाक्षेत्रं त्र्यंबकमेव वर्तते ॥ तत्रापि भूतप्रेतपिशाचादिपीडापरिहरणसमर्थस्य ज्योतिर्लिंगरूपस्य श्रीमत्र्यंबकराजस्य निवासहेतुत्वेन नदीतीरस्थं शुचिदेशवर्तिसर्वक्षेत्रेभ्योप्यधिकं भवतीति सिद्धं ॥ काम्यकर्मफलातिशयदहेतुमत्त्वात् ॥ तेन श्रुतिस्मृतिपुराणानुकारिणेतिहासप्रकरणपठितदाल्भ्यश्रीकृष्णसंवादेन त-

थाऽलौकिकाविगीतशिष्टाचारेणापि त्र्यंबकक्षेत्राधिकरणकनागबल्यादिकाम्यकर्मणो बलीयस्त्वमावश्यकत्वं च ॥ तस्मात् त्र्यंबकक्षेत्राग्रे नासिकावंतिकाक्षेत्रयोः का कथा ॥ कथं तेषां तुल्यत्वं ॥ ग्रंथकृतस्तु तेषां तुल्यत्वेन नागबल्यादिविधिप्रयुक्तनयसमासघटितं शिष्टाचारं तत्र स्थापयितुं प्रवृत्ताः ॥ इदं तु केवलं प्रसह्यागंतुकत्वमिति शुभमलमतिविस्तरेण ॥ इति श्रीमद्गोदांतर्गतमूलभूतकुशावर्तैंद्रावरजविमलपदयुगुलजलजनिःसृतविस्तृतजलजालकल्लोलातिपवित्रीकृतत्र्यंबकक्षेत्रनिवासिब्रह्मवर्चसप्रीतसाप्तपुरुषत्रेतापरिचर्यारतशांडिल्यगोत्रोत्पन्नपाटणकरकुलावतंसविश्वनाथसूरिसूनुरामचंद्रकृते श्रीमद्गोदाकुशावर्तयात्रावादविवादनिर्णयसुधाब्धिनामप्रबंधे पंचमोद्देशः समाप्तश्चायं यात्राप्रबंधः ॥

पंचद्विवसूभूशाके शोभने श्रावणाभिधे ॥ मासि शुक्लत्रयोदश्यां श्रीगोदासोमपादयोः ॥ अर्प्यतेऽयं प्रबंधस्तु भक्तिश्रद्धापुरस्सरं ॥ शुभं भवतु.

इदं पुस्तकं त्र्यम्बकेश्वरक्षेत्रनिवासिना पाटणकरोपाह्वरावजीशास्त्रिसूनुना रामशास्त्रिणा निर्माय
मुम्बय्यां निर्णयसागरयन्त्रालयेऽङ्कयित्वा प्रकाशितम् ।

# इति श्रीगोदाकुशावर्तयात्रा-
# वादविवादनिर्णयसुधाब्धिर्नामप्रबंधः ॥



शके १८३०—सन् १९०८.

| | | | | |
|---|---|---|---|---|
| ५३ | २ | ० | शिवपुराणउत्तरार्धे | सारपुराणे |
| ५३ | | ७ | सिंहस्यपूर्व | सिंहस्थपर्व |
| ५३ | | ८ | शिव | सौर |
| ५४ | ८ | ० | गोदया | गोदायां |
| ५५ | | ६ | माणकर्णिका | मणिकर्णिकां |
| ५९ | | ११ | स्वद्द रा | रुद्वारा |
| ६० | | १ | महालयो: | महालययो: |
| ६२ | | १ | मूलं | मूल |

# श्रीगोदाकुशावर्तयात्रावादविवादसुधाब्धेः प्रबंधस्य

## शुद्धिपत्रं शोधश्च

| पृष्ठं | पूर्वार्धपंक्तिः | उत्तरार्धपंक्तिः | अशुद्धं | शुद्धं |
|---|---|---|---|---|
| ९ | | १३ | पंचभूतात्मका | पंचभूतात्मिका |
| ९ | | २३ | कृतज्ञा | कृतज्ञता |
| १० | | ६ | परकारणात् | पदकारणात् |
| ११ | | १२ | कनखले | कणखले |
| १३ | | ७ | विषयकाणि | विषयकानि |
| १७ | | ८ | जीवतोपि | जीवन्नपि |
| १९ | २१ | ० | काले | कालेऽपि |
| २० | | २१ | ० | येष्वेव |
| २३ | | ५ | मूलस्थ | मूलस्थ |
| ३६ | | २८ | शिव | सौर |

